महावाक्यरत्नावली उपनिषदान्तर्गतम्

अनुक्रमणिका



१ अथ सार्धान्तिकविधिवाक्यानि । (६६)

ॐ सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत ॥ १॥

छान्दोग्य ३।१४।१*

आत्मानमेवावेदहं ब्रह्मास्मीति ॥ २॥

बृहदारण्यक १।४।१०*

आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ॥ ३॥

बृहदारण्यक २।४।५*

महत्पदं ज्ञात्वा वृक्षमूले वसेत् ॥ ४॥

सुबाल १३*

सच्चिदानन्दात्मानमद्वितीयं ब्रह्म भावयेत् ॥ ५॥

वज्रसूचिका ९*

अहं ब्रह्मास्मीत्यनुसन्धानं कुर्यात् ॥ ६॥

पैङ्गल ३।२*

स तज्ज्ञो बालोन्मत्तपिशाचवज्जडवृत्त्या लोकमाचरेत् ॥ ७॥

मण्डलब्राह्मण ५।४*

ब्राह्मणः समाहितो भूत्वा तत्त्वंपदैक्यमेव सदाभ्यसेत् ॥ ८॥

पैङ्गल ३।४

सर्वत्राद्वैतब्रह्मबुद्धिं कुर्यात् ॥ ९॥

????

आशाम्बरो न नमस्कारो न स्वाहाकारो न स्वधाकारो
न निन्दास्तुतिर्यादृच्छिको भवेत् ॥ १०॥

परमहंस ११*

सर्वतः स्वरूपमेव पश्यन् जीवन्मुक्तिमवाप्य प्रारब्धप्रति-
भासनाशपर्यन्तं स्वरूपानुसन्धानेन वसेत् ॥ ११॥

नारदपरिव्राजक ७।३

स्वरूपानुसन्धानं विनाऽन्यथाचारपरो न भवेत् ॥ १२॥

नारदपरिव्राजक ५।१

वेदान्तश्रवणं कुर्वन् योगं समारभेत ॥ १३॥

शाण्डिल्य १।५।५

आकुञ्चनेन कुण्डलिन्याः कपाटमुद्घाट्य मोक्षद्वारं विभेदयेत् ॥ १४॥

शाण्डिल्य १।१०।३७

यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ॥ १५॥

कठ १।३।१३*

ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ॥ १६॥

कठ १।३।१३

आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ॥ १७॥

शाट्यायनी २२*
किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ॥ १८॥

शाट्यायनी २२
तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ॥ १९॥

शाट्यायनी २३*
नानुध्यायाद्बहूञ्शब्दान्वाचोविग्लापनं हि तत् ॥ २०॥

वराह ४।३३
यतो निर्विषयस्यास्य मनसो मुक्तिरिष्यते ॥ २१॥

अमृतबिन्दु ३*
अतो निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा ॥ २२॥

अमृतबिन्दु ३
चित्तमेव हि संसारस्तत्प्रयत्नेन शोधयेत् ॥ २३॥

मैत्रायणी ४।३*
दृश्यं ह्यदृश्यतां नीत्वा ब्रह्माकारेण चिन्तयेत् ॥ २४॥

तेजोबिन्दु १।५०*
मायाकार्यमिदं भेदमस्तिचेद्ब्रह्मभावनम् ॥ २५॥

तेजोबिन्दु ६।१००
देहोऽहमिति दुःखं चेद्ब्रह्माहमिति निश्चयः ॥ २६॥

तेजोबिन्दु ६।१००
हृदयग्रन्थिरस्तित्वे छेदने ब्रह्मचक्रकम् ॥ २७॥

तेजोबिन्दु ६।१०१
संशये समनुप्राप्ते ब्रह्मनिश्चयमाप्नुयात् ॥ २८॥

तेजोबिन्दु ६।१०१
विज्ञेयोऽक्षरतन्मात्रो जीवितं चापि चञ्चलम् ॥ २९॥

पैङ्गल ४।१७*

विहाय शास्त्रजालानि यत्सत्यं तदुपास्यताम् ॥ ३०॥

पैङ्गल ४।१७

यस्य स्त्री तस्य भोगेच्छा निस्त्रीकस्य क्व भोगभूः ॥ ३१॥

महा ३।४८*

स्त्रियं त्यक्त्वा जगत्त्यक्तं जगत्त्यक्त्वा सुखी भवेत् ॥ ३२॥

महा ३।४८*

चित्तं कारणमर्थानां तस्मिन्सति जगत्त्रयम् ॥ ३३॥

योगशिखा ६।५९*

तस्मिन्क्षीणे जगत्क्षीणं तच्चिकित्स्यं प्रयत्नतः ॥ ३४॥

योगशिखा ६।५९*

सुप्तेरुत्थाय सुप्त्यन्तं ब्रह्मैकं प्रविचिन्त्यताम् ॥ ३५॥

२।६४*

गच्छँस्तिष्ठन्नुपविशंश्छयानो वान्यथापि वा ॥ ३६॥

कुण्डिका २८*

यथेच्छया वसेद्विद्वानात्मारामः सदा मुनिः ॥ ३७॥

कुण्डिका २८

ज्योतिर्लिङ्गं भ्रुवोर्मध्ये नित्यं ध्यायेत्सदा यतिः ॥ ३८॥

ब्रह्मविद्या ८०*

आत्मानमात्मनः साक्षाद्ब्रह्मबुद्ध्या सुनिश्चलम् ॥ ३९॥

ब्रह्मविद्या २९*

देहजात्यादिसम्बन्धान्वर्णाश्रमसमन्वितान् ॥ ४०॥

ब्रह्मविद्या २९

वेदशास्त्रपुराणादि पदपांसुमिव त्यजेत् ॥ ४१॥

ब्रह्मविद्या ३०

एकाकी निःस्पृहस्तिष्ठेन्न हि केन सहालपेत् ॥ ४२॥

नारदपरिव्राजक ३।५९*
दद्यान्नारायणेत्येवं प्रतिवाक्यं सदा यतिः ॥ ४३॥

नारदपरिव्राजक ३।५९
मुनिः कौपीनवासाः स्यान्नग्नो वा ध्यानतत्परः ॥ ४४॥

नारदपरिव्राजक ४।३२*
अध्यात्मरतिरासीनो निरपेक्षो निराशिषः ॥ ४५॥

नारदपरिव्राजक ३।४४*
आत्मनैव सहायेन सुखार्थी विचरेदिह ॥ ४६॥

नारदपरिव्राजक ३।४४
सन्दिग्धः सर्वभूतानां वर्णाश्रमविवर्जितः ॥ ४७॥

नारदपरिव्राजक ४।३६*
अन्धवज्जडवच्चापि मूकवच्च महीं चरेत् ॥ ४८॥

नारदपरिव्राजक ४।३६
यद्यत्पश्यति चक्षुर्भ्यां तत्तदात्मेति भावयेत् ॥ ४९॥

योगतत्त्व ६९*
यद्यच्छृणोति कर्णाभ्यां तत्तदात्मेति भावयेत् ॥ ५०॥

योगतत्त्व ७०*
लभते नासया यद्यत्तत्तदात्मेति भावयेत् ॥ ५१॥

योगतत्त्व ७०
जिह्वया यद्रसं ह्यत्ति तत्तदात्मेति भावयेत् ॥ ५२॥

योगतत्त्व ७१*
त्वचा यद्यत्स्पृशेद्योगी तत्तदात्मेति भावयेत् ॥ ५३॥

योगतत्त्व ७१*
दृष्टिं ज्ञानमयीं कृत्वा पश्येद्ब्रह्ममयं जगत् ॥ ५४॥

तारसार १।२९*
द्रष्टृदर्शनदृश्यानां विरामो यत्र वा भवेत् ॥ ५५॥

तारसार १।३०*
दृष्टिस्तत्रैव कर्तव्या न नासाग्रावलोकनी ॥ ५६॥

तारसार १।३०
देवाग्न्यगारे तरुमूले गुहायां वसेदसङ्गोऽलक्षितशीलवृत्तः ॥ ५७॥

शाट्यायनी २१*
निरिन्धनज्योतिरिवोपशान्तो न चोद्विजेदुद्विजेद्यत्रकुत्र ॥ ५८॥

शाट्यायनी २१

शान्तो दान्त उपरतस्तितिक्षुर्योऽनूचानो ह्यभिजज्ञौ समानः ॥ ५९॥
शाट्यायनी ५*
त्यक्तेषणो ह्यनृणस्तं विदित्वा मौनी वसेदाश्रमे यत्र कुत्र ॥ ६०॥

शाट्यायनी ५*
यमैश्च नियमैश्चैव ह्यासनैश्च सुसंयतः ॥ ६१॥

त्रिशिखिब्राह्मण ५३*
नाडीशुद्धिं च कृत्वादौ प्राणायामं समाचरेत् ॥ ६२॥

त्रिशिखिब्राह्मण ५३
सर्वचिन्तां परित्यज्य सावधानेन चेतसा ॥ ६३॥

वराह २।८३*
निर्विकल्पः प्रसन्नात्मा प्राणायामं समाचरेत् ॥ ६४॥

वराह ५।५५
मरुदभ्यसनं सर्वं मनोयुक्तं समभ्यसेत् ॥ ६५॥

शाण्डिल्य १।१०।३७*
इतरत्र न कर्तव्या मनोवृत्तिर्मनीषिणा ॥ ६६॥

शाण्डिल्य १।१०।३७*

२ अथ सार्धान्तिकबन्धमोक्षवाक्यानि । (३१)
देहादीनात्मत्वेनाभिमन्यते सोऽभिमान आत्मनो बन्धः ॥ १॥

सर्वसार १
तन्निवृत्तिर्मोक्षः ॥ २॥

सर्वसार १
देवमनुष्याद्युपासनाकामसङ्कल्पो बन्धः ॥ ३॥

निरलम्ब*
कर्तृत्वाद्यहङ्कारसङ्कल्पो बन्धः ॥ ४॥

निरलम्ब*
अणिमाद्यष्टैश्वर्याशासिद्धसङ्कल्पो बन्धः ॥ ५॥

निरलम्ब*
यमाद्यष्टाङ्गयोगसङ्कल्पो बन्धः ॥ ६॥

निरलम्ब
केवलं मोक्षापेक्षासङ्कल्पो बन्धः ॥ ७॥

निरलम्ब*
सङ्कल्पमात्रसम्भवो बन्धः ॥ ८॥

निरलम्ब
नित्यानित्यवस्तुविचारादनित्यसंसारसुखदुःखविषयसमस्तक्षेत्रममता बन्धक्षयो मोक्षः ॥ ९॥

निरलम्ब*
मन एव मनुष्याणां कारणं बन्धमोक्षयोः ॥ १०॥

शाट्यायनी १*
बन्धनं विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥ ११॥

त्रिपुरतापिनी ५।३
ममेति बध्यते जन्तुर्नममेति विमुच्यते ॥ १२॥

वराह २।४४*

ममत्वेन भवेज्जीवो निर्ममत्वेन केवलः ॥ १३॥

योगचूडामणि ८४*

स्वसङ्कल्पवशाद्बद्धो निःसङ्कल्पाद्विमुच्यते ॥ १४॥

महा २।७०*

द्रष्टा दृश्यवशाद्बद्धो दृश्याभावे विमुच्यते ॥ १५॥

महा ४।४८*

इच्छामात्रमविद्येयं तन्नाशो मोक्ष उच्यते ॥ १६॥

महा ४।११६*

भोगेच्छामात्रकं बन्धस्तत्त्यागो मोक्ष उच्यते ॥ १७॥

महा ५।९७*

चिच्चैत्यकलना बन्धस्तन्मुक्तिर्मुक्तिरुच्यते ॥ १८॥

महा ६।७७*

अनास्थैव हि निर्वाणं दुःखमास्थापरिग्रहः ॥ १९॥

महा ४।१११*

कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ॥ २०॥

सन्न्यास २।९८*

स्वरूपावस्थितिर्मुक्तिस्तद्भ्रंशोऽहन्त्ववेदनम् ॥ २१॥

महा ५।२*

चित्ते चलति संसारो निश्चले मोक्ष उच्यते ॥ २२॥

योगशिखा ६।५८*

बन्धो हि वासनाबद्धो मोक्षः स्याद्वासनाक्षयः ॥ २३॥

मुक्तिका २।६८*

पदार्थभावनादार्ढ्यं बन्ध इत्यभिधीयते ॥ २४॥

महा २।४१*

वासनातानवं ब्रह्मन् मोक्ष इत्यभिधीयते ॥ २५॥

महा २।४१
न मोक्षो नभसः पृष्ठे न पाताले न भूतले ॥ २६॥

अन्नपूर्णा २।२३*
सर्वाशासंक्षये चेतःक्षयो मोक्ष इतीष्यते ॥ २७॥

अन्नपूर्णा २।२३*
मोक्षो मेऽस्त्विति चिन्तान्तर्जाता चेदुत्थितं मनः ॥ २८॥

अन्नपूर्णा २।२४*
मननोत्थे मनस्येष बन्धः सांसारिको मतः ॥ २९॥

अन्नपूर्णा २।२४
तदप्रमार्जनमात्रं हि महासंसारतां गतम् ॥ ३०॥

अन्नपूर्णा ४।७६*
तत्प्रमार्जनमात्रन्तु मोक्ष इत्यभिधीयते ॥ ३१॥

अन्नपूर्णा १।७६*
इति सार्धान्तिकबन्धमोक्षवाक्यान्येकत्रिंशत् ॥ ३१॥

द्वितीयं प्रकरणं समाप्तम् ।

३ अथ सार्धान्तिकाविद्वन्निन्दावाक्यानि । (२१)

अथ योऽन्यां देवतामुपास्तेऽन्योसावन्योऽहमस्मीति न स वेद
यथा पशुः ॥ १॥

बृहदारण्यक १।४।१०*
अत्र भिदामित्र मन्यमानः शतधा सहस्रधा भिन्नो मृत्योः
स मृत्युमाप्नोति ॥ २॥

नृसिंहतापिनी २।८।१*
कर्तृत्वाद्यहङ्कारभावनारूढो मूढः ॥ ३॥

निरलम्ब*
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ ४॥

कठ २।१।१०*
अनुभूतिं विना मूढो वृथा ब्रह्मणि मोदते ॥ ५॥

मैत्रेयी २।२२*
प्रतिबिम्बितशाखाग्रफलास्वादनमोदवत् ॥ ६॥

मैत्रेयी १।२२
अष्टाङ्गं च चतुष्पादं त्रिस्थानं पञ्चदैवतम् ॥ ७॥

ध्यानबिन्दु १३
ॐकारं यो न जानाति ब्राह्मणो न भवेत्तु सः ॥ ८॥

ध्यानबिन्दु १४
अतिवर्णाश्रमं रूपं सच्चिदानन्दलक्षणम् ॥ ९॥

वराह २।६*
यो न जानाति सोऽविद्वान्कदा मुक्तो भविष्यति ॥ १०॥

वराह २।६
कुशला ब्रह्मवार्तायां वृत्तिहीनाः सुरागिणः ॥ ११॥

तारसार १।४६*
तेऽप्यज्ञानतया नूनं पुनरायान्ति यान्ति च ॥ १२॥

तारसार १।४६
काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः ॥ १३॥

नारदपरिव्राजक ५।२
स्वायत्तमेकान्तहितं स्वेप्सितत्यागवेदनम् ॥ १४॥

महा ४।८९
यस्य दुष्करतां यातं धिक्तं पुरुषकीटकम् ॥ १५॥

महा ४।८९
अद्वितीयब्रह्मतत्त्वं न जानन्ति यथा तथा ॥ १६॥

वराह २।५७*

भ्रान्ता एवाखिलास्तेषां क्व मुक्तिः क्वेह वा सुखम् ॥ १७॥

वराह २।५७

अज्ञानोपहतो बाल्ये यौवने वनिताहतः ॥ १८॥

महा ६।२३*

शेषे कलत्रचिन्तार्तः किं करोति नराधमः ॥ १९॥

महा ६।२३

इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन जन्तवः ॥ २०॥

सन्न्यास २।३०*

धराविवरमग्नानां कीटानां समतां गताः ॥ २१॥

सन्न्यास २।३०

इति सार्धान्तिकाविद्वन्निन्दावाक्यानि एकविंशत् ॥ २१ ॥

तृतीयं प्रकरणं समाप्तम् ।

४ अथ सार्धान्तिकजगन्मिथ्यावाक्यानि । (३३)

नान्यत्किञ्चन मिषत् ॥ १॥

ऐतरेय १

वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ॥ २॥

छान्दोग्य ६।१।४

अतोऽन्यदार्तम् न तु तद्द्वितीयमस्ति ॥ ३॥

बृहदारण्यक ४।२।२३

न तु तद्द्वितीयमस्ति॥ ४॥

नृसिंहतापिनी २।८।१

नात्र काचन भिदाऽस्ति नैव तत्र काचन भिदाऽस्ति ॥ ५॥

नृसिंहतापिनी २।१।१

सर्वं विकारजातं मायामात्रम् ॥ ६॥

नृसिंहतापिनी ५
सर्वत्र न ह्यस्ति द्वैतसिद्धिः ॥ ७॥

नृसिंहतापिनी २।९।१
नास्ति द्वैतं कुतो मर्त्यम् ॥ ८॥

सुबाल ५
प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ॥ ९॥

माण्डुक्यकारिका १।१७*
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥ १०॥

माण्डुक्यकारिका १।१७
विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ॥ ११॥

माण्डुक्यकारिका १।१८*
उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ॥ १२॥

माण्डुक्यकारिका १।१८
द्वितीयकारणाभावादनुत्पन्नमिदं जगत् ॥ १३॥

महा ५।५८*
यथैवेदं नभः शून्यं जगच्छून्यं तथैव हि ॥ १४॥

महा ५।१८४
इदं प्रपञ्चं यत्किञ्चिद्यद्यज्जगति वीक्ष्यते ॥ १५॥

तेजोबिन्दु ५।७५*
दृश्यरूपं च दृग्रूपं सर्वं शशविषाणवत् ॥ १६॥

तेजोबिन्दु ५।७५
इदं प्रपञ्चं नास्त्येव नोत्पन्नं नो स्थितं जगत् ॥ १७॥

तेजोबिन्दु ५।३१
चित्तं प्रपञ्चमित्याहुर्नास्ति नास्त्येव सर्वदा ॥ १८॥

तेजोबिन्दु ५।३२*

मायाकार्यादिकं नास्ति माया नास्ति भयं न हि ॥ १९॥

तेजोबिन्दु ५।३३
परं ब्रह्माहमस्मीति स्मरणस्य मनो न हि ॥ २०॥

तेजोबिन्दु ५।३०
वन्ध्याकुमारवचने भीतिश्चेदस्त्विदं जगत् ॥ २१॥

तेजोबिन्दु ६।७३
शशशृङ्गेण नागेन्द्रो मृतश्चेज्जगदस्ति सत् ॥ २२॥

तेजोबिन्दु ६।७४
मृगतृष्णाजलं पीत्वा तृप्तश्चेदस्त्विदं जगत् ॥ २३॥

तेजोबिन्दु ६।७४
गन्धर्वनगरे सत्ये जगद्भवति सर्वदा ॥ २४॥

तेजोबिन्दु ६।७५
गगने नीलिमासत्ये जगत्सत्यं भविष्यति ॥ २५॥

तेजोबिन्दु ६।७६
मासात्पूर्वं मृतो मर्त्यो ह्यागतश्चेज्जगद्भवेत् ॥ २६॥

तेजोबिन्दु ६।८०
गोस्तनादुद्भवं क्षीरं पुनरारोपणे जगत् ॥ २७॥

तेजोबिन्दु ६।८१
ज्वालाग्निमण्डले पद्मवृद्धिश्चेदस्त्विदं जगत् ॥ २८॥

तेजोबिन्दु ६।८४
ज्ञानिनो हृदयं मूढैर्ज्ञातं चेदस्त्विदं जगत् ॥ २९॥

तेजोबिन्दु ६।९६
अजकुक्षौ जगन्नास्ति ह्यात्मकुक्षौ जगन्न हि ॥ ३०॥

तेजोबिन्दु ६।९९
सर्वदाऽभेदकलने द्वैताद्वैतं न विद्यते ॥ ३१॥

तेजोबिन्दु ६।९९

नास्ति नास्ति जगत्सर्वं गुरुशिष्यादिकं न हि ॥ ३२॥

तेजोबिन्दु ५।१०५

सच्चिदानन्दमात्रोऽहमनुत्पन्नमिदं जगत् ॥  ३३॥

तेजोबिन्दु ६।५८

इति जगन्मिथ्यावाक्यानि त्रयस्त्रिंशत् ॥ ३३॥

चतुर्थं प्रकरणं समाप्तम् ।

५  अथ सार्धान्तिकोपदेशवाक्यानि ।  (५४)

स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो ॥ १॥

छान्दोग्य ६।८।१*

अभयं वै जनक प्राप्तोऽसि ॥ २॥

बृहदारण्यक ४।१।४*

ब्रह्मचर्यमहिंसां चापरिग्रहं सत्यं च यत्नेन
हे रक्षतो हे रक्षतो हे रक्षत इति ॥ ३॥

आरुणिक ३*

तत्त्वमसि त्वं तदसि ॥ ४॥

पैङ्गल ३*

यन्मनसा न मनुते येनाहुर्मनो मतम् ॥ ५॥

केन १।६*

तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ६॥

केन १।५

यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत् ॥ ७॥

कैवल्य १।१६

सूक्ष्मात्सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत् ॥ ८॥

कैवल्य १।१६

अन्तःपूर्णो बहिःपूर्णः पूर्णकुम्भ इवार्णवे ॥ ९॥

मैत्रेयी २।२७

अन्तःशून्यो बहिःशून्यः शून्यकुम्भ इवाम्बरे ॥ १०॥

मैत्रेयी २।२७

मा भवग्राह्यभावात्मा ग्राहकात्मा च मा भव ॥ ११॥

मैत्रेयी २।२८

भावनामखिलां त्यक्त्वा यच्छिष्टं तन्मयो भव ॥ १२॥

वराह ४।१९

द्रष्टृदर्शनदृश्यादि त्यक्त्वा वासनया सह ॥ १३॥

महा ६।१८

दर्शनप्रथमाभासमात्मानं केवलं भज ॥ १४॥

मैत्रेयी २।२९

चित्ताकाशं चिदाकाशमाकाशश्च तृतीयकम् ॥ १५॥

महा ४।५८

द्वाभ्यां शून्यतरं विद्धि चिदाकाशं महामुने ॥ १६॥

महा ४।५८

ध्यानतो हृदयाकाशे चिति चिच्चक्रधारया ॥ १७॥

महा ४।९३

मनो मारय निःशङ्कं त्वां प्रबध्नन्ति नारयः ॥ १८॥

महा ४।९४

भोगैकवासनां त्यक्त्वा त्यज त्वं भेदवासनाम् ॥ १९॥

महा ४।१०९

भावाभावौ ततस्त्यक्त्वा निर्विकल्पः स्थिरो भव ॥ २०॥

महा ४।१०९

त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ॥ २१॥

सन्न्यास २।१२

उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज ॥ २२॥

सन्न्यास २।१२

आत्मन्यतीते सर्वस्मात्सर्वरूपेऽथवा तते ॥ २३॥

अन्नपूर्णा २।२५

को बन्धः कस्य वा मोक्षो निर्मूलं मननं कुरु ॥ २४॥

अन्नपूर्णा २।२५

आशा यातु निराशात्वमभावं यातु भावना ॥ २५॥

अन्नपूर्णा ५।३८

अमनस्त्वं मनो यातु तवासङ्गेन जीवतः ॥ २६॥

अन्नपूर्णा ५।३८

एकमाद्यन्तरहितं चिन्मात्रममलं ततम् ॥ २७॥

अन्नपूर्णा ५।६५*

खादप्यतितरां सूक्ष्मं तद्ब्रह्मासि न संशयः ॥ २८॥

अन्नपूर्णा ५।६५

रक्षको विष्णुरित्यादि ब्रह्मा सृष्टेस्तु कारणम् ॥ २९॥

तेजोबिन्दु ५।५१

संहारे रुद्र इत्येवं सर्वं मिथ्येति निश्चिनु ॥ ३०॥

तेजोबिन्दु ५।५२

मत्यक्तं नास्ति किञ्चिद्वा मत्यक्ता पृथिवी तु वा ॥ ३१॥

तेजोबिन्दु ३।१९

मयातिरिक्तं यद्यद्वा तत्तन्नास्तीति निश्चिनु ॥ ३२॥

तेजोबिन्दु ३।२०

अनात्मेति प्रसङ्गो वा अनात्मेति मनोऽपि वा ॥ ३३॥

तेजोबिन्दु ५।१५

अनात्मेति जगद्वापि नास्त्यनात्मेति निश्चिनु ॥ ३४॥

तेजोबिन्दु ५।१६

आदिमध्यायसानेषु दुःखं सर्वमिदं यतः ॥ ३५॥

अक्षि ४७*

तस्मात्सर्वं परित्यज्य तत्त्वनिष्ठो भवानघ ॥ ३६॥

अक्षि ४७*

निद्राया लोकवार्तायाः शब्दादेरात्मविस्मृतेः ॥ ३७॥

अध्यात्म ५

क्वचिन्नावसरं दत्त्वा चिन्तयात्मानमात्मनि ॥ ३८॥

अध्यात्म ५

सर्वव्यापारमुत्सृज्य अहं ब्रह्मेति भावय ॥ ३९॥

तेजोबिन्दु ६।१०६*

अहं ब्रह्मेति निश्चित्य त्वहंभावं परित्यज ॥ ४०॥

तेजोबिन्दु ६।१०४

घटाकाशं महाकाश इवात्मानं परात्मनि ॥ ४१॥

अध्यात्म ७*

विलाप्याखण्डभावेन तूष्णीं भव सदा मुने ॥ ४२॥

अध्यात्म ७

चिदिहास्तीति चिन्मात्रमिदं चिन्मयमेव च ॥ ४३॥

याज्ञवल्क्य २३*

चित्त्वं चिदहमेते च लोकाश्चिदिति भावय ॥ ४४॥

याज्ञवल्क्य २३

सत्यचिद्घनमखण्डमद्वयं सर्वदृश्यरहितं निरामयम् ॥ ४५॥

वराह ३।६*

यत्पदं विमलमद्वयं शिवं तत्सदाहमिति मौनमाश्रय ॥ ४६॥

वराह ३।६

जन्ममृत्युसुखदुःखवर्जितं जातिनीतिकुलगोत्रदूरगम् ॥ ४७॥

वराह ३।७*

चिद्विवर्तजगतोऽस्य कारणं तत्सदाहमिति मौनमाश्रय ॥ ४८॥

वराह ३।७

पूर्णमद्वयमखण्डचेतनं विश्वभेदकलनादिवर्जितम् ॥ ४९॥

वराह ३।८*

अद्वितीयपरसंविदात्मकं तत्सदाहमिति मौनमाश्रय ॥ ५०॥

वराह ३।८

स्वात्मनोऽन्यदिवाभातं चराचरमिदं जगत् ॥ ५१॥

वराह २।२५

स्वात्ममात्रतया बुद्ध्वा तदस्मीति विभावय ॥ ५२॥

वराह २।२५

विलाप्य विकृतिं कृत्स्नां सम्भवव्यत्ययक्रमात् ॥ ५३॥

मुक्तिका २।५०

यशोऽरिष्टं च चिन्मात्रं चिदानन्दं विचिन्तय ॥ ५४॥

मुक्तिका २।५०

इति सार्धान्तिकोपदेशवाक्यानि चतुःपञ्चाशत् ॥ ५४॥

पञ्चमं प्रकरणं समाप्तम् ।

## ६ अथ सार्धान्तिकजीवब्रह्मैक्यवाक्यानि । (३८)

स यश्चायं पुरुषे ॥ १॥

तैत्तिरीय २।८।३*

यश्चासावादित्ये ॥ २॥

तैत्तिरीय २।८।३

स एकः ॥ ३॥

तैत्तिरीय २।८।३

सत्यमात्मा ब्रह्मैव ब्रह्मात्मैवात्र ह्येव न विचिकित्स्यम् ॥ ४॥

नृसिंहतापिनी २।९।१

त्वं ब्रह्मासि ॥ ५॥

तेजोबिन्दु ५।५९*

अहं ब्रह्मास्मि ॥ ६॥

बृहदारण्यक १।४।१०

आवयोरन्तरं न विद्यते त्वमेवाहमहमेव त्वम् ॥७॥

त्रिपाद्विभूतिमहानारायण ६*

गताः कलाः पञ्चदशप्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु ॥ ८॥

मुण्डक ३।२।७*

कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति ॥ ९॥

मुण्डक ३।२।७

येनेयते शृणोतीदं जिघ्रति व्याकरोति च ॥ १०॥

शुकरहस्य ३।१*

स्वाद्वस्वादु विजानाति तत्प्रज्ञानमुदीरितम् ॥ ११॥

शुकरहस्य ३।१

चतुर्मुखेन्द्रदेवेषु मनुष्याश्वगवादिषु ॥ १२॥

शुकरहस्य ३।२*

चैतन्यमेकं ब्रह्मातः प्रज्ञानं ब्रह्म मय्यपि ॥ १३॥

शुकरहस्य ३।२

परिपूर्णः परात्मास्मिन्देहे विद्याधिकारिणि ॥ १४॥

शुकरहस्य ३।३*

बुद्धेः साक्षितया स्थित्वा स्फुरन्नहमितीर्यते ॥ १५॥

शुकरहस्य ३।३

स्वतः पूर्णः परात्मात्र ब्रह्मशब्देन वर्णितः ॥ १६॥

शुकरहस्य ३।४*

अस्मीत्यैक्यपरामर्शात्तेन ब्रह्म भवाम्यहम् ॥ १७॥

शुकरहस्य ३।४
एकमेवाद्वितीयं सन्नामरूपविवर्जितम् ॥ १८॥

शुकरहस्य ३।५*
सृष्टेः पुराधुनाप्यस्य तादृक् त्वं तदितीर्यते ॥ १९॥

शुकरहस्य ३।५
श्रोतुर्देहेन्द्रियातीतं वस्त्वत्र त्वंपदेरितम् ॥ २०॥

शुकरहस्य ३।६*
एकता ग्राह्यतेऽसीति तदैक्यमनुभूयताम् ॥ २१॥

शुकरहस्य ३।६
स्वप्रकाशापरोक्षत्वमयमित्युक्तितो मतम् ॥ २२॥

शुकरहस्य ३।७*
अहङ्कारादिदेहान्तात्प्रत्यगात्मेति गीयते ॥ २३॥

शुकरहस्य ३।७
दृश्यमानस्य सर्वस्य जगतस्तत्त्वमीर्यते ॥ २४॥

शुकरहस्य ३।८*
ब्रह्मशब्देन तद्ब्रह्म स्वप्रकाशात्मरूपकम् ॥ २५॥

शुकरहस्य ३।८
मायाविद्ये विहायैव उपाधी परजीवयोः ॥ २६॥

अध्यात्म ३२*
अखण्डं सच्चिदानन्दं परं ब्रह्म विलक्ष्यते ॥ २७॥

अध्यात्म ३२
हकारः खेचरीप्रोक्तस्त्वंपदं चेति निश्चितम् ॥ २८॥

योगचूडामणि ८२
हकारः परमेशः स्यात्तत्पदं चेति निश्चितम् ॥ २९॥

योगचूडामणि ८३
सकारो ध्यायते जन्तुर्हकारो हि भवेद्ध्रुवम् ॥ ३०॥

योगचूडामणि ८३
आद्यो रा तत्पदार्थः स्यान्मकारस्त्वंपदार्थवान् ॥ ३१॥

रामरहस्य ५।१२
तयोः संयोजनमसीत्यर्थे तत्त्वविदो विदुः ॥ ३२॥

रामरहस्य ५।१३
नमस्त्वमर्थी विज्ञेयो रामस्तत्पदमुच्यते ॥ ३३॥

रामरहस्य ५।१३
असीत्यर्थे चतुर्थी स्यादेवं मन्त्रेषु योजयेत् ॥ ३४॥

रामरहस्य ५।१४
क्षीरं क्षीरे यथा क्षिप्तं तैलं तैले जलं जले ॥ ३५॥

आत्म २३*
संयुक्तमेकतां याति तथात्मन्यात्मविन्मुनिः ॥ ३६॥

आत्म २४
यथा व्योम व्योमैव भवति स्वयम् ॥ ३७॥

आत्म २२*
तथैवोपाधिविलये ब्रह्मैव ब्रह्मवित्स्वयम् ॥ ३८॥

आत्म २३
इति सार्धान्तिकजीवब्रह्मैक्यवाक्यान्यष्टत्रिंशत् ॥ ३८॥

षष्ठं प्रकरणं समाप्तम् ।

७ अथ सार्धान्तिकमननवाक्यानि । (३९)
अहमन्नमहमन्नमहमन्नम् ॥ १॥

तैत्तिरीय ३।१०।६*

अहमन्नादो३ऽहमन्नादो३ऽहमन्नादः ॥ २॥

तैत्तिरीय ३।१०।६

अहं मनुरभवं सूर्यश्च ॥ ३॥

बृहदारण्यक १।४।१०*

अहमेवेदं सर्वमसानि ॥ ४॥

छान्दोग्य ५।२।६*

यथा फेनतरङ्गादि समुद्रादुत्थितं पुनः ॥ ५॥

जाबालदर्शन ५।१०।६*

समुद्रे लीयते तद्वज्जगन्मय्यनुलीयते ॥ ६॥

जाबालदर्शन ५।१०।७

अनात्मदृष्टेरविवेकनिद्रामहंममस्वप्नगतिं गतोऽहम् ॥ ७॥

शुकरहस्य ३।९*

स्वरूपसूर्येऽभ्युदिते स्फुटोक्तैर्गुरोर्महावाक्यपदैः प्रबुद्धः ॥ ८॥

शुकरहस्य ३।९

प्राणाश्चलन्तु तद्धर्मैः कामैर्वा हन्यतां मनः ॥ ९॥

आत्मबोध २०*

आनन्दबुद्धिपूर्णस्य मम दुःखं कथं भवेत् ॥ १०॥

आत्मबोध २०

न मे बन्धो न मे मुक्तिर्न मे शास्त्रं न मे गुरुः ॥ ११॥

आत्मबोध १९*

मायामात्रविकासत्वान्मायातीतोऽहमद्वयः ॥ १२॥

आत्मबोध १९

आत्मानमञ्जसा वेद्मि क्वाप्यज्ञानं पलायितम् ॥ १३॥

आत्मबोध २१*

कर्तृत्वमपि मे नष्टं कर्तव्यं वापि न क्वचित् ॥ १४॥

आत्मबोध २१

ब्राह्मण्यं कुलगोत्रे च नामसौन्दर्यजातयः ॥ १५॥

आत्मबोध २२*

स्थूलदेहगता ह्येते स्थूलाद्भिन्नस्य मे न हि ॥ १६॥

आत्मबोध २२

क्षुत्पिपासान्ध्यबाधिर्यकामक्रोधादयोऽखिलाः ॥ १७॥

आत्मबोध २३*

लिङ्गदेहगता ह्येते ह्यलिङ्गस्य न विद्यते ॥ १८॥

आत्मबोध २३

जडत्वप्रियमोदत्वधर्माः कारणदेहगाः ॥ १९॥

आत्मबोध २४*

न सन्ति मम नित्यस्य निर्विकारस्वरूपिणः ॥ २०॥

आत्मबोध २४

चिद्रूपत्वान्न मे जाड्यं सत्यत्वान्नानृतं मम ॥ २१॥

आत्मबोध ३०*

आनन्दत्वान्न मे दुःखमज्ञानाद्भाति सत्यवत् ॥ २२॥

आत्मबोध ३०

नाहं देहो जन्ममृत्यू कुतो मे नाहं प्राणः क्षुत्पिपासे कुतो मे ॥ २३॥

सर्वसार ६*

नाहं चेतः शोकमोहौ कुतो मे नाहं कर्ता बन्धमोक्षौ कुतो मे ॥ २४॥

सर्वसार ६*

आनन्दमन्तर्निजमाश्रयन्तमाशापिशाचीमवमानयन्तम् ॥ २५॥

मैत्रेयी १।१२*

आलोकयन्तं जगदिन्द्रजालमापत्कथं मां प्रविशेदसङ्गम् ॥ २६॥

मैत्रेयी १।१२

देवार्चनस्नानशौचभिक्षादौ वर्ततां वपुः ॥ २७॥

आरुणिक २४*

तारं जपतु वाक् तद्वत्पठत्वाम्नायमस्तकम् ॥ २८॥

आरुणिक २४

विष्णुं ध्यायेत धीर्यद्वा ब्रह्मानन्दे विलीयताम् ॥ २९॥

आरुणिक २५

साक्ष्यहं किञ्चिदप्यत्र न कुर्वे नापि कारये ॥ ३०॥

आरुणिक २५

ज्ञातं ज्ञातव्यमधुना दृष्टं द्रष्टव्यमद्भुतम् ॥ ३१॥

महा ५।५८*

विश्रान्तोऽस्मि चिरं श्रान्तश्चिन्मात्रान्नास्ति किञ्चन ॥ ३२॥

महा ५।५९

न भूतं न भविष्यं च चिन्तयामि कदाचन ॥ ३३॥

अन्नपूर्णा ५।५७*

न स्तौमि न च निन्दामि ह्यात्मनोऽन्यन्नहि क्वचित् ॥ ३४॥

अन्नपूर्णा ५।५९

अलेपकोऽहमजरो नीरागः शान्तवासनः ॥ ३५॥

अन्नपूर्णा ५।९२*

स्वपूर्णात्मातिरेकेण जगज्जीवेश्वरादयः ॥ ३६॥

वराह २।११

न सन्ति नास्ति माया च तेभ्यश्चाहं विलक्षणः ॥ ३७॥

वराह २।११

किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम् ॥ ३८॥

२।३५*

यन्मया पूरितं विश्वं महाकल्पाम्बुना यथा ॥ ३९॥

वराह २।३५

इति सार्धान्तिकमननवाक्यान्येकोनचत्वारिंशत् ॥ ३९॥

सप्तमं प्रकरणं समाप्तम् ।

८ अथ सार्धान्तिकजीवन्मुक्तिवाक्यानि । (११९)

स तत्र पर्येति जक्षत्क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा
ज्ञातिभिर्वा वयस्यैर्वा नोपजनं स्मरन्निदं शरीरम् ॥

छान्दोग्य ८।१२।३*

स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरति-
रात्मक्रीडः आत्ममिथुन आत्मानन्दः स्वराड् भवति ॥ २॥

छान्दोग्य ७।१५।४*

ते देवाः पुत्रेषणायाश्च वित्तेषणायाश्च लोकेषणायाश्च
ससाधनेभ्यो व्युत्थाय निरागारा निष्परिग्रहा अशिखा अयज्ञोपवीता
अन्धा बधिरा मुग्धाः क्लीबा मूका उन्मत्ता इव परिवर्तमानाः शान्ता
दान्ता उपरतास्तितिक्षवः । समाहिता आत्मरतय आत्मक्रीडा आत्ममिथुना
आत्मानन्दाः प्रणवमेव परं ब्रह्मात्मप्रकाशं शून्यं
जानन्तस्तत्रैव परिसमाप्ताः ॥ ३॥

कुचेलोऽसहाय एकाकी समाधिस्थ आत्मकाम आप्तकामो निष्कामो
जीर्णकामो हस्तिनि सिंहे दंशे मशके नकुले सपराक्षसगन्धर्वेषु
मृत्यो रूपाणि विदित्वा न बिभेति कुतश्चनेति ॥ ४॥

शरणमुपगम्यतत्त्वमसि सर्वं खल्विदं ब्रह्म नेह नानास्ति
किञ्चनेत्यादि महावाक्यार्थानुभवज्ञानाद्ब्रह्मैवाहमस्मीति निश्चित्य
निर्विकल्पसमाधिना स्वतन्त्रो यतिश्चरति स संन्यासी स मुक्तः स पूज्यः
स योगी स परमहंसः सोऽवधूतः स ब्राह्मण इति ॥ ५॥

निरलम्ब*

जीवः पञ्चविंशकः स्वकल्पितचतुर्विंशतितत्त्वं परित्यज्य
षड्विंशकपरमात्माहमिति निश्चयाज्जीवन्मुक्तो भवति ॥ ६॥

मण्डलब्राह्मण १।४

तुरीयमक्षरमिति ज्ञात्वा जागरिते सुषुप्त्यवस्थापन्न इव
यद्यच्छ्रुतं यद्यद्दृष्टं तत्सर्वमविज्ञातमिव यो वसेत्तस्य

स्वप्नावस्थायामपि तादृगवस्था भवति स जीवन्मुक्तो भवति ॥ ७॥

नारदपरिव्राजक ५।*

सकृद्विभातसदानन्दानुभवैकगोचरो ब्रह्मविद्विद्वांश्चक्षुरादि बाह्यप्रपञ्चोपरतः सर्वं जगदात्मत्वेन पश्यन्नात्मेति भावयन् कृतकृत्यो भवति ॥ ८॥

मण्डलब्राह्मण २।३*

निर्द्वन्द्वः सदाऽचञ्चलगात्रः परमशान्तिं स्वीकृत्य नित्यशुद्धः परमात्माहमेवेत्यखण्डानन्दः पूर्णः कृतार्थः परिपूर्ण- परमाकाशमग्नमनाः प्राप्तोन्मन्यवस्थः सन्न्यस्तसर्वेन्द्रियवर्गोऽनेक- जन्मार्जितपुण्यपुञ्जपरिपक्व- कैवल्यफलोऽखण्डानन्दनिरस्तसर्वक्लेशकश्मलो ब्रह्माहमस्मीति कृतकृत्यो भवति ॥ ९॥

मण्डलब्राह्मण ३।१*

ब्रह्मैवाहमस्मीत्यनवरतं ब्रह्मप्रणवानुसन्धानेन यः कृतकृत्यो भवति स परमहंसपरिव्राट् ॥ १०॥

परमहंसपरिव्राजक*

????भावाभावकलाविनिर्मुक्तः सर्वसंशयध्वस्तः पूर्णाहंभावः कृतकृत्यो भवति ॥ ११॥ ????

????

प्राणो ह्येष सर्वभूतैर्विभाति विजानन्विद्वान्भवते नातिवादी ॥ १२॥

मुण्डक ३।१।

आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः ॥ १३॥

मुण्डक ३।१।४

निमिषार्धं न तिष्ठन्ति वृत्तिं ब्रह्ममयीं विना ॥

तारसार १।४७*

यथा तिष्ठन्ति ब्रह्माद्याः सनकाद्याः शुकादयः ॥ १५॥

तारसार १।४७

अध्यात्मरतिरासीनो निरपेक्षो निराशिषः ॥ १६॥

नारदपरिव्राजक ३।४४*

सर्वद्वन्द्वैर्विनिर्मुक्तो ब्रह्मण्येवावतिष्ठते ॥ १७॥

नारदपरिव्राजक ३।५२

कपालं वृक्षमूलानि कुचेलान्यसहायता ॥ १८॥

नारदपरिव्राजक ३।५४*

समता चैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणम् ॥ १९॥

नारदपरिव्राजक ३।५४

स्वप्नेऽपि योऽभियुक्तः स्याज्जाग्रतीव विशेषतः ॥ २०॥

नारदपरिव्राजक ५।५

ईदृक्चेष्टः स्मृतः श्रेष्ठो वरिष्ठो ब्रह्मवादिनाम् ॥ २१॥

नारदपरिव्राजक ५।५

निर्मानश्चानहङ्कारो निर्द्वन्द्वश्छिन्नसंशयः ॥ २२॥

नारदपरिव्राजक ५।१७

आत्मक्रीड आत्मरतिरात्मवान् समदर्शनः ॥ २३॥

नारदपरिव्राजक ५।२५

स्मृत्वा स्पृष्ट्वा च भुक्त्वा च दृष्ट्वा ज्ञात्वा
शुभाशुभम् ॥ २४॥

महा ४।३२

न हृष्यति ग्लायति यः स विज्ञेयो जितेन्द्रियः ॥ २५॥

नारदपरिव्राजक ३।३८

अप्राप्तं हि परित्यज्य सम्प्राप्ते समतां गतः ॥ २६॥

महा ४।३६*

अदृष्टखेदाखेदो यः सन्तुष्ट इति कथ्यते ॥ २७॥

महा ४।३६

नाकृतेन कृतेनार्थो न श्रुतिस्मृतिविभ्रमैः ॥ २८॥

महा ४।४१

निर्मन्दर इवाम्भोधिः स तिष्ठति यथा स्थितः ॥ २९॥

महा ४।४१
सम्यग्ज्ञानावबोधेन नित्यमेकसमाधिना ॥ ३०॥

अन्नपूर्णा ५।४९
साङ्ख्य एवावबुद्धा ये ते साङ्ख्या योगिनः स्मृताः ॥ ३१॥

अन्नपूर्णा ५।४९
प्राणाद्यनिलसंशान्तौ युक्त्या ये पदमागताः ॥ ३२॥

अन्नपूर्णा ५।५०
अनामयमनाद्यन्तं ते स्मृता योगयोगिनः ॥ ३३॥

अन्नपूर्णा ५।५०
सुखदुःखदशाधीरं साम्यान्न प्रोद्धरन्ति यम् ॥ ३४॥

अन्नपूर्णा ४।१२
निःश्वासा इव शैलेन्द्रं चित्तं तस्य मृतं विदुः ॥ ३५॥

अन्नपूर्णा ४।१२
वाचामतीतविषयो विषयाशादशोज्झितः ॥ ३६॥

अन्नपूर्णा ५।९६
परानन्दरसाक्षुब्धो रमते स्वात्मनात्मनि ॥ ३७॥

अन्नपूर्णा ५।९६
निर्ग्रन्थिः शान्तसन्देहो जीवन्मुक्तो विभावनः ॥ ३८॥

अक्षि ३९
अनिर्वाणोऽपि निर्वाणश्चित्प्रदीप इव स्थितः ॥ ३९॥

अक्षि ३९
निर्धनोऽपि सदा तुष्टोऽप्यसहायो महाबलः ॥ ४०॥

आत्म १२
नित्यतृप्तोऽप्यभुञ्जानोऽप्यसमः समदर्शनः ॥ ४१॥

आत्म १३

कुर्वन्नपि न कुर्वाणश्चाभोक्ता फलभोग्यपि ॥ ४२॥

आत्म १३
शरीरप्यशरीरोऽसौ परिच्छिन्नोऽपि सर्वगः ॥ ४३॥

आत्म १४
अध्यात्मरतिराशान्तः पूर्णः पावनमानसः ॥ ४४॥

अन्नपूर्णा २।२६
नैष्कर्मण्येन न तस्यार्थस्तस्यार्थोऽस्ति न कर्मभिः ॥ ४५॥मुक्तिका २।२०
न समाधानजाप्याभ्यां यस्य निर्वासनं मनः ॥ ४६॥

मुक्तिका २।२०
जगज्जीवादिरूपेण पश्यन्नपि परात्मवित् ॥ ४७॥

पाशुपतब्रह्म २४
न तत्पश्यति चिद्रूपं ब्रह्म वस्त्वेव पश्यति ॥ ४८॥

पाशुपतब्रह्म २५
अहमन्नं सदान्नाद इति हि ब्रह्मवेदनम् ॥ ४९॥

पाशुपतब्रह्म ३८
ब्रह्मविद्ग्रसति ज्ञानात् सर्वं ब्रह्मात्मनैव तु ॥ ५०॥

पाशुपतब्रह्म ३९
समाधिमथकर्माणि मा करोतु करोतु वा ॥ ५१॥

मुक्तिका २।१९
हृदयेनात्तसर्वेहो मुक्त एवोत्तमाशयः ॥ ५२॥

मुक्तिका २।१९
अक्षरत्वाद्वरेण्यत्वाद्व्यस्तसंसारबन्धनात् ॥ ५३॥

आरुणिक १
तत्त्वमस्यादिलक्ष्यत्वादवधूत इतीर्यते ॥ ५४॥

आरुणिक १
यो विलङ्घ्याश्रमान्वर्णानात्मन्येव स्थितः पुमान् ॥ ५५॥

आरुणिक २
अतिवर्णाश्रमी योगी अवधूतः स कथ्यते ॥ ५६॥

आरुणिक २
यथा रविः सर्वरसान्प्रभुङ्क्ते हुताश्वनश्चापि हि सर्वभक्षः ॥ ५७॥

आरुणिक ६
तथैव योगी विषायन्प्रभुङ्क्ते न लिप्यते पुण्यपापैश्च शुद्धः ॥ ५८॥

आरुणिक ६
केवलं सुसमः स्वच्छो मौनी मुदितमानसः ॥ ५९॥

महा २।२७
सन्तोषामृतपानेन ये शान्तास्तृप्तिमागताः ॥ ६०॥

महा ४।३५
आत्मारामा महात्मानस्ते महापदमागताः ॥ ६१॥

महा ४।३५
हर्षामर्षभयक्रोधकामकार्पण्यदृष्टिभिः ॥ ६२॥

महा २।४४
न हृष्यति ग्लायति यः स जीवन्मुक्त उच्यते ॥ ६३॥

महा २।४३
अहङ्कारमयीं त्यक्त्वा वासनां लीलयैव यः ॥ ६४॥

महा २।४५
तिष्ठति ध्येयसन्त्यागी स जीवन्मुक्त उच्यते ॥ ६५॥

महा २।४५
मौनवान्निरहंभावो निर्मानो मुक्तमत्सरः ॥ ६६॥

महा २।५०*
यः करोति गतोद्वेगः स जीवन्मुक्त उच्यते ॥ ६७॥

महा २।५०

यावती दृश्यकलना सकलेयं विलोक्यते ॥ ६८॥

महा २।५३

सा येन सुष्ठु सन्त्यक्ता स जीवन्मुक्त उच्यते ॥ ६९॥

महा २।५३

उद्वेगानन्दरहितः समया स्वच्छया धिया ॥ ७०॥

महा २।५७

न शोचते न चोदेति स जीवन्मुक्त उच्यते ॥ ७१॥

महा २।५७

सर्वेच्छाः सकलाः शङ्काः सर्वेहाः सर्वनिश्चयाः ॥ ७२॥महा २।५८*
धिया येन परित्यक्ताः स जीवन्मुक्त उच्यते ॥ ७३॥

महा २।५८

जन्मस्थितिविनाशेषु सोदयास्तमयेषु च ॥ ७४॥

महा २।५९*

सममेव मनो यस्य स जीवन्मुक्त उच्यते ॥ ७५॥

महा २।५९

सर्वाधिष्ठानचिन्मात्रे निर्विकल्पे चिदात्मनि ॥ ७६॥

अन्नपूर्णा २।२७

यो जीवति गतस्नेहः स जीवन्मुक्त उच्यते ॥ ७७॥

अन्नपूर्णा २।२७

क्रियानाशाद्भवेच्चिन्तानाशोऽस्माद्वासनाक्षयः ॥ ७८॥

अध्यात्म १२*

वासनाप्रक्षयो मोक्षः स जीवन्मुक्त उच्यते ॥ ७९॥

अध्यात्म १२

निर्विकल्पा च चिन्मात्रा वृत्तिः प्रज्ञेति कथ्यते ॥ ८०॥

अध्यात्म ४४

सा सर्वदा भवेद्यस्य स जीवन्मुक्त उच्यते ॥ ८१॥

अध्यात्म ४४
देहेन्द्रियेष्वहंभाव इदंभावस्तदन्यके ॥ ८२॥

अध्यात्म ४५*
यस्य नो भवतः क्वापि स जीवन्मुक्त उच्यते ॥ ८३॥

अध्यात्म ४५
न प्रत्यग्ब्रह्मणोर्भेदं कदापि ब्रह्मसर्गयोः ॥ ८४॥

अध्यात्म ४६*
प्रज्ञया यो विजानाति स जीवन्मुक्त उच्यते ॥ ८५॥

अध्यात्म ४६
साधुभिः पूज्यमानोऽपि पीड्यमानोऽपि दुर्जनैः ॥ ८६॥

अध्यात्म ४७*
समभावो भवेद्यस्य स जीवन्मुक्त उच्यते ॥ ८७॥

अध्यात्म ४७
यथास्थितमिदं यस्य व्यवहारवतोऽपि च ॥ ८८॥

वराह ४।२१
अस्तं गतं स्थितं व्योम स जीवन्मुक्त उच्यते ॥ ८९॥

वराह ४।२१
नोदेति नास्तमायाति सुखे दुःखे मनःप्रभा ॥ ९०॥

वराह ४।२२
यथा प्राप्तस्थितिर्यस्य स जीवन्मुक्त उच्यते ॥ ९१॥

वराह ४।२२
यो जागर्ति सुषुप्तिस्थो यस्य जाग्रन्नविद्यते ॥ ९२॥

वराह ४।२३
यस्य निर्वासनो बोधः स जीवन्मुक्त उच्यते ॥ ९३॥

वराह ४।२३

रागद्वेषभयादीनामनुरूपं चरन्नपि ॥ ९४॥

वराह ४।२४*

योऽन्तर्व्योमवदत्यच्छः स जीवन्मुक्त उच्यते ॥ ९५॥

वराह ४।२४

यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते ॥ ९६॥

वराह ४।२४

कुर्वतोऽकुर्वतो वापि स जीवन्मुक्त उच्यते ॥ ९७॥

वराह ४।२५

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ॥ ९८॥

वराह ४।२६

हर्षामर्षभयोन्मुक्तः स जीवन्मुक्त उच्यते ॥ ९९॥

वराह ४।२६

यः समस्तार्थजालेषु व्यवहार्यपि शीतलः ॥ १००॥

वराह ४।२७

परार्थेष्विव पूर्णात्मा स जीवन्मुक्त उच्यते ॥ १०१॥

महा २।६२

प्रजहाति यदा कामान्सर्वांश्चित्तगतान्मुने ॥ १०२॥

वराह ४।२८

मयि सर्वात्मके तुष्टः स जीवन्मुक्त उच्यते ॥ १०३॥

वराह ४।२८

चैत्यवर्जितचिन्मात्रे पदे परमपावने ॥ १०४॥

वराह ४।२९

अक्षुब्धचित्तो विश्रान्तः स जीवन्मुक्त उच्यते ॥ १०५॥

वराह ४।२९

इदं जगदयं सोऽहं दृश्यजातमवास्तवम् ॥ १०६॥

वराह ४।३०
यस्य चित्ते न स्फुरति स जीवन्मुक्त उच्यते ॥ १०७॥

वराह ४।३०
शान्तसंसारकलनः कलावानपि निष्कलः ॥ १०८॥

महा २।६१
यः सचित्तोऽपि निश्चित्तः स जीवन्मुक्त उच्यते ॥ १०९॥

महा २।६१
चिदात्माहं परात्माहं निर्गुणोऽहं परात्परः ॥ ११०॥

तेजोबिन्दु ४।१
आत्ममात्रेण यस्तिष्ठेत्स जीवन्मुक्त उच्यते ॥ १११॥

तेजोबिन्दु ४।१
देहत्रयातिरिक्तोऽहं शुद्धचैतन्यमस्म्यहम् ॥ ११२॥

तेजोबिन्दु ४।२*
ब्रह्माहमिति यस्यान्तः स जीवन्मुक्त उच्यते ॥ ११३॥

तेजोबिन्दु ४।२
यस्य देहादिकं नास्ति यस्य ब्रह्मेति निश्चयः ॥ ११४॥

तेजोबिन्दु ४।३
परमानन्दपूर्णो यः स जीवन्मुक्त उच्यते ॥ ११५॥

तेजोबिन्दु ४।३
नित्यानन्दः प्रसन्नात्मा ह्यन्यचिन्ताविवर्जितः ॥ ११६॥

तेजोबिन्दु ४।६
किञ्चिदस्तित्वहीनो यः स जीवन्मुक्त उच्यते ॥ ११७॥

तेजोबिन्दु ४।७
अहं ब्रह्मास्म्यहं ब्रह्मास्म्यहं ब्रह्मेति निश्चयः ॥ ११८॥

तेजोबिन्दु ४।२९
चिदहं चिदहं चेति स जीवन्मुक्त उच्यते ॥ ११९॥

तेजोबिन्दु ४।३०

इति जीवन्मुक्तिवाक्यान्येकोनविंशत्यधिकं शतम् ॥ ११९॥

अष्टमं प्रकरणं समाप्तम् ।

९ अथ सार्धान्तिकस्वानुभूतिवाक्यानि । (११८)

योऽसावसौ पुरुषः सोऽहमस्मि ॥ १॥

ईश १६

तद्योऽहं सोऽसौ योऽसौ सोऽहम् ॥ २॥

बह्वृच ८

तं शान्तमचलमद्वयानन्दचिद्घन एवास्मि ॥ ३॥

परमहंस २

तत्पूर्णानन्दैकबोधस्तद्ब्रह्मैवाहमस्मि ॥ ४॥

नारदपरिव्राजक ३।८६

त्वं वाहमस्मि भगवो देव तेऽहं वै त्वमसि ॥ ५॥

वराह २।३४

सच्चिदानन्दात्मकोऽहमजोऽहं परिपूर्णोऽहमस्मि ॥ ६॥

त्रिपाद्विभूतिमहानारायण ८

शुद्धाद्वैतब्रह्माहम् ॥ ७॥

मण्डलब्राह्मण २।४

वाचामगोचरनिराकारपरब्रह्मस्वरूपोऽहमेव ॥ ८॥

त्रिपाद्विभूतिमहानारायण ८

सदोज्ज्वलोऽविद्यातत्कार्यहीनः स्वात्मा बन्धहरः सर्वदा द्वैतरहित
आनन्दरूपः सर्वाधिष्ठानसन्मात्रो निरस्ताविद्यातमोमोहोऽहमेवाहमों
तद्यत्परं ब्रह्म रामचन्द्रश्चिदात्मकः सोऽहमों तद्रामभद्रः
परं ज्योती रसोऽहमोम् ॥ ९॥

नृसिंहतापिनी २।१।१

तत्परः परमपुरुषः पुराणपुरुषोत्तमोनित्यशुद्धबुद्धमुक्तसत्य-
परमानन्दानन्ताद्वयपरिपूर्णः परमात्मा ब्रह्मैवाहं रामोऽस्मि ॥ १०॥ तारसार ३।८
त्रिषु धामसु यद्भोज्यं भोक्ता भोगश्च यद्भवेत् ॥ ११॥

कैवल्य १।१८*

तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः ॥ १२॥

कैवल्य १।१८

मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ॥ १३॥

कैवल्य १।१९*

मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम् ॥ १४॥

कैवल्य १।१९

निर्वाणोऽस्मि निरीहोऽस्मि निरंशोऽस्मि निरीप्सितः ॥ १५॥

सन्न्यास २।५६*

चिदात्माऽस्मि निरंशोऽस्मि परापरविवर्जितः ॥ १६॥

अन्नपूर्णा ५।१३

ब्रह्मैवाहं सर्ववेदान्तवेद्यं नाहं वेद्यं व्योमवातादिरूपम् ॥ १७॥

सर्वसार ५*

रूपं नाहं नाम नाहं न कर्म ब्रह्मैवाहं सच्चिदानन्दरूपम् ॥ १८॥

सर्वसार ५*

नित्यः शुद्धो बुद्धमुक्तस्वभावः सत्यः सूक्ष्मः
सन्विभुश्चाद्वितीयः ॥ १९॥

मैत्रेयी १।११

आनन्दाब्धिर्यत्परः सोऽहमस्मि प्रत्यग्धातुर्नात्र संशीतिरस्ति ॥ २०॥

मैत्रेयी १।११

सोऽहमर्कः परं ज्योतिरर्कज्योतिरहं शिवः ॥ २१॥

महावाक्य

आत्मज्योतिरहं शुक्रः सर्वज्योतिरसावहोम् ॥ २२॥

महावाक्य

द्वैतभावविमुक्तोऽस्मि सच्चिदानन्दलक्षणः ॥ २३॥

अन्नपूर्णा ५।६८

शुद्धबोधस्वरूपोऽहं केवलोऽहं सदाशिवः ॥ २४॥

अध्यात्म ६९

निष्क्रियोऽस्म्यविकारोऽस्मि निर्गुणोऽस्मि निराकृतिः ॥ २५॥

कुण्डिका २५

निर्विकल्पोऽस्मि नित्योऽस्मि निरालम्बोऽस्मि निर्द्वयः ॥ २६॥

कुण्डिका २५

केवलाखण्डबोधोऽहं स्वानन्दोऽहं निरन्तरः ॥ २७॥

कुण्डिका २६

सत्यं ज्ञानमनन्तं यत्परं ब्रह्माहमेव तत् ॥ २८॥

वराह ३।२

केवलं चित्सदानन्दं ब्रह्मैवाहं जनार्दनः ॥ २९॥

वराह ३।१९

अशुभाशुभसङ्कल्पैः संशान्तोऽस्मि निरामयः ॥ ३०॥

सन्न्यास २।४९

नष्टेष्टानिष्टकलनः संविन्मात्रपरोऽस्म्यहम् ॥ ३१॥

सन्न्यास २।४९

अन्तर्याम्यहमग्राह्योऽनिर्देश्योऽहमलक्षणः ॥ ३२॥

ब्रह्मविद्या ८०

अद्वैतोऽहं पूर्णोऽहमबाह्योऽहमनन्तरः ॥ ३३॥

ब्रह्मविद्या ८८

अद्वयानन्दविज्ञानघनोऽस्म्यहमविक्रियः ॥ ३४॥

ब्रह्मविद्या ८९

अविद्याकार्यहीनोऽहमवाङ्मनसगोचरः ॥ ३५॥

ब्रह्मविद्या ९०

आत्मचैतन्यरूपोऽहमहमानन्दचिद्घनः ॥ ३६॥

ब्रह्मविद्या ९१

आप्तकामोऽहमाकाशात्परमात्मेश्वरोऽस्म्यहम् ॥ ३७॥

ब्रह्मविद्या ९२

चिदानन्दोऽस्म्यहं चेता चिद्घनश्चिन्मयोऽस्म्यहम् ॥ ३८॥

ब्रह्मविद्या ९५

ज्योतिर्मयोऽस्म्यहं ज्यायाज्ज्योतिषां ज्योतिरस्म्यहम् ॥ ३९॥

ब्रह्मविद्या ९५

नित्योऽहं निरवद्योऽहं निष्क्रियोऽस्मि निरञ्जनः ॥ ४०॥

ब्रह्मविद्या ९७

निर्मलो निर्विकल्पोऽहं निराख्यातोऽस्मि निश्चलः ॥ ४१॥

ब्रह्मविद्या ९७

निर्विकारो नित्यपूतो निर्गुणो निस्पृहोऽस्म्यहम् ॥ ४२॥

ब्रह्मविद्या ९८

निरिन्द्रियो नियन्ताहं निरपेक्षोऽस्मि निष्कलः ॥ ४३॥

ब्रह्मविद्या ९८

पुरुषः परमात्माहं पुराणः परमोऽस्म्यहम् ॥ ४४॥

ब्रह्मविद्या ९९

पूर्णानन्दैकबोधोऽहं प्रत्यगेकरसोऽस्म्यहम् ॥ ४५॥

ब्रह्मविद्या १००

प्रज्ञातोऽहं प्रशान्तोऽहं प्रकाशः परमेश्वरः ॥ ४६॥

ब्रह्मविद्या १०१

एकधा चिन्त्यमानोऽहं द्वैताद्वैतविलक्षणः ॥ ४७॥

ब्रह्मविद्या १०१

शुद्धोऽस्मि शुक्रः शान्तोऽस्मि शाश्वतोऽस्मि शिवोऽस्म्यहम् ॥ ४८॥

ब्रह्मविद्या १०४

अहं सकृद्विभातोऽस्मि स्वे महिम्नि सदा स्थितः ॥ ४९॥

ब्रह्मविद्या १०५

सच्चिदानन्द्मात्रोऽहं स्वप्रकाशोऽस्मि चिद्घनः ॥ ५०॥

ब्रह्मविद्य १०९

मानावमानहीनोऽस्मि निर्गुणोऽस्मि शिवोऽस्म्यहम् ॥ ५१॥

मैत्रेयी ३।४

द्वैताद्वैतविहीनोऽस्मि द्वन्द्वहीनोऽस्मि सोऽस्म्यहम् ॥ ५२॥

मैत्रेयी ३।४

भावाभावविहीनोऽस्मि भाषाहीनोऽस्मि भास्म्यहम् ॥ ५३॥

मैत्रेयी ३।५

शून्याशून्यविहीनोऽस्मि शोभनाशोभनोऽस्म्यहम् ॥ ५४॥

मैत्रेयी ३।५

सदसद्भेदहीनोऽस्मि सङ्कल्परहितोऽस्म्यहम् ॥ ५५॥

मैत्रेयी ३।७

नानात्मभेदहीनोऽस्मि ह्यखण्डानन्दविग्रहः ॥ ५६॥

मैत्रेयी ३।८

बन्धमोक्षविहीनोऽस्मि शुद्धं ब्रह्मास्मि सोऽस्म्यहम् ॥ ५७॥

मैत्रेयी ३।९

चित्तादिसर्वहीनोऽस्मि परमोऽस्मि परात्परः ॥ ५८॥

मैत्रेयी ३।१०

सदा विचाररूपोऽस्मि निर्विचारोऽस्मि सोऽस्म्यहम् ॥ ५९॥

मैत्रेयी ३।१०

ध्यातृध्यानविहीनोऽस्मि ध्येयहीनोऽस्मि सोऽस्म्यहम् ॥ ६०॥

मैत्रेयी ३।११

लक्ष्यालक्ष्यविहीनोऽस्मि लयहीनरसोऽस्म्यहम् ॥ ६१॥

मैत्रेयी ३।१३

मातृमानविहीनोऽस्मि मेयहीनः शिवोऽस्म्यहम् ॥ ६२॥

मैत्रेयी ३।१३

सर्वेन्द्रियविहीनोऽस्मि सर्वकर्मकृदप्यहम् ॥ ६३॥

मैत्रेयी ३।१५

मुदितामुदिताख्योऽस्मि सर्वमौनफलोऽस्म्यहम् ॥ ६४॥

मैत्रेयी ३।१६

षड्विकारविहीनोऽस्मि षट्कोशरहितोऽस्म्यहम् ॥ ६५॥

मैत्रेयी ३।१८

देशकालविमुक्तोऽस्मि दिगम्बरसुखोऽस्म्यहम् ॥ ६६॥

मैत्रेयी ३।१९

अखण्डाकाशरूपोऽस्मि ह्यखण्डाकारमस्म्यहम् ॥ ६७॥

मैत्रेयी ३।२०

प्रपञ्चमुक्तचित्तोऽस्मि प्रपञ्चरहितोऽस्म्यहम् ॥ ६८॥

मैत्रेयी ३।२०

सर्वप्रकाशरूपोऽस्मि चिन्मात्रज्योतिरस्म्यहम् ॥ ६९॥

मैत्रेयी ३।२१

कालत्रयविमुक्तोऽस्मि कामादिरहितोऽस्म्यहम् ॥ ७०॥

मैत्रेयी ३।२१

मुक्तिहीनोऽस्मि मुक्तोऽस्मि मोक्षहीनोऽस्म्यहम् सदा ॥ ७१॥

मैत्रेयी ३।२२

गन्तव्यदेशहीनोऽस्मि गमनादिविवर्जितः ॥ ७२॥

मैत्रेयी ३।२३

सर्वदा समरूपोऽस्मि शान्तोऽस्मि पुरुषोत्तमः ॥ ७३॥

मैत्रेयी ३।२४

चिदक्षरोऽहं सत्योऽहं वासुदेवोऽजरोऽमरः ॥ ७४॥

तेजोबिन्दु ६।६९

अहमेवाक्षरं ब्रह्म वासुदेवाख्यमद्वयम् ॥ ७५॥

नारदपरिव्राजक ३।२०

परब्रह्मस्वरूपोऽहं परमानन्दमस्म्यहम् ॥ ७६॥

तेजोबिन्दु ३।१

केवलं ज्ञानरूपोऽहं केवलं परमोऽस्म्यहम् ॥ ७७॥

तेजोबिन्दु ३।१

केवलं शान्तरूपोऽहं केवलं चिन्मयोऽस्म्यहम् ॥ ७८॥

तेजोबिन्दु ३।२

केवलं नित्यरूपोऽहं केवलं शाश्वतोऽस्म्यहम् ॥ ७९॥

तेजोबिन्दु ३।२

केवलं सत्त्वरूपोऽहमहं त्यक्त्वाहमस्म्यहम् ॥ ८०॥

तेजोबिन्दु ३।३

केवलं तुर्यरूपोऽस्मि तुर्यातीतोऽस्मि केवलः ॥ ८१॥

तेजोबिन्दु ३।४

केवलाकाररूपोऽस्मि शुद्धरूपोऽस्म्यहं सदा ॥ ८२॥

तेजोबिन्दु ३।५

निर्विकल्पस्वरूपोऽस्मि निरीहोऽस्मि निरामयः ॥ ८३॥

तेजोबिन्दु ३।६

अपरिच्छिन्नरूपोऽस्मि ह्यनन्तानन्दरूपवान् ॥ ८४॥

तेजोबिन्दु ३।७

आत्मारामस्वरूपोऽस्मि अहमात्मा सदाशिवः ॥ ८५॥

तेजोबिन्दु ३।९

आदिमध्यान्तशून्योऽस्मि ह्याकाशसदृशोऽस्म्यहम् ॥ ८६॥

तेजोबिन्दु ३।१०
नित्यशुद्धचिदानन्दः सत्तामात्रोऽहमव्ययः ॥ ८७॥

तेजोबिन्दु ३।११
नित्यबुद्धविशुद्धैकः सच्चिदानन्दमस्म्यहम् ॥ ८८॥

तेजोबिन्दु ३।११
भूमानन्दस्वरूपोऽस्मि भाषाहीनोऽस्म्यहं सदा ॥ ८९॥

तेजोबिन्दु ३।१२
सर्वाधिष्ठानरूपोऽस्मि सर्वदा चिद्घनोऽस्म्यहम् ॥ ९०॥

तेजोबिन्दु ३।१२
चित्तवृत्तिविहीनोऽहं चिदात्मैकरसोऽस्म्यहम् ॥ ९१॥तेजोबिन्दु ३।१४
अहं ब्रह्मैव सर्वं स्यादहं चैतन्यमेव हि ॥ ९२॥

तेजोबिन्दु ३।१६
अहमेवाहमेवास्मि भूमाकारस्वरूपवान् ॥ ९३॥

तेजोबिन्दु ३।१६
अहमेव महानात्मा ह्यहमेव परात्परः ॥ ९४॥

तेजोबिन्दु ३।१७
अहमन्यवदाभामि ह्यहमेव शरीरवत् ॥ ९५॥

तेजोबिन्दु ३।१७
अहं शिष्यवदाभामि ह्यहं लोकत्रयाश्रयः ॥ ९६॥

तेजोबिन्दु ३।१८
अहं कालत्रयातीतो ह्यहं वेदैरुपासितः ॥ ९७॥

तेजोबिन्दु ३।१८
अहं शास्त्रेण निर्णीत अहं चित्ते व्यवस्थितः ॥ ९८॥

तेजोबिन्दु ३।१९
आनन्दघन एवाहमहं ब्रह्मास्मि केवलम् ॥ ९९॥

तेजोबिन्दु ३।२६
आत्मनात्मनि तृप्तोऽस्मि ह्यरूपो ह्यहमव्ययः ॥ १००॥

तेजोबिन्दु ३।२८
आकाशादपि सूक्ष्मोऽहमाद्यन्ताभाववानहम् ॥ १०१॥

तेजोबिन्दु ३।२९
सत्तामात्रस्वरूपोऽहं शुद्धमोक्षस्वरूपवान् ॥ १०२॥

तेजोबिन्दु ३।३०
सत्यानन्दस्वरूपोऽहं ज्ञानानन्दघनोऽस्म्यहम् ॥ १०३॥

तेजोबिन्दु ३।३१
नामरूपविमुक्तोऽहमहमानन्दविग्रहः ॥ १०४॥

तेजोबिन्दु ३।३६
आदिचैतन्यमात्रोऽहमखण्डैकरसोऽस्म्यहम् ॥ १०५॥

तेजोबिन्दु ३।३७
सर्वत्र पूर्णरूपोऽहं परामृतरसोऽस्म्यहम् ॥ १०६॥

तेजोबिन्दु ३।३८
एकमेवाद्वितीयं सद्ब्रह्मैवाहं न संशयः ॥ १०७॥

तेजोबिन्दु ३।३९
अहमेव परं ब्रह्म ह्यहमेव गुरोर्गुरुः ॥ १०८॥

तेजोबिन्दु ६।४४
सर्वज्ञानप्रकाशोऽस्मि मुख्यविज्ञानविग्रहः ॥ १०९॥

तेजोबिन्दु ६।६८
तुर्यातुर्यप्रकाशोऽस्मि तुर्यातुर्यादिवर्जितः ॥ ११०॥

तेजोबिन्दु ६।६९
दृशिस्वरूपं गगनोपमं परं सकृद्विभातं त्वजमेकमक्षरम् ॥ १११॥

मुक्तिका २।७३
अलेपकं सर्वगतं यदव्ययं तदेव चाहं सकलं विमुक्त ॐ ॥ ११२॥

मुक्तिका २।७३
अहं ब्रह्मास्मि मन्त्रोऽयं जन्मपापं विनाशयेत् ॥ ११३॥

तेजोबिन्दु ३।६१
अहं ब्रह्मास्मि मन्त्रोऽयं भेदबुद्धिं विनाशयेत् ॥ ११४॥

तेजोबिन्दु ३।६३
अहं ब्रह्मास्मि मन्त्रोऽयं कोटिदोषं विनाशयेत् ॥ ११५॥

तेजोबिन्दु ३।६८
अहं ब्रह्मास्मि मन्त्रोऽयं ज्ञानानन्दं प्रयच्छति ॥ ११६॥

तेजोबिन्दु ३।७३
सर्वमन्त्रान्समुत्सृज्य इमं मन्त्रं समभ्यसेत् ॥ ११७॥

तेजोबिन्दु ३।७४
सद्यो मोक्षमवाप्नोति नास्ति सन्देहमण्वपि ॥ ११८॥

तेजोबिन्दु ३।७४
इति स्वानुभूतिवाक्यानि अष्टादशोत्तरशतम् ॥ ११८॥

नवमं प्रकरणं समाप्तम् ।

## १० अथ सार्धान्तिकसमाधिवाक्यानि । (५०)

जीवात्मपरमात्मैक्यावस्था त्रिपुटिरहिता परमानन्दस्वरूपा
शुद्धचैतन्यात्मिका समाधिः ॥ १॥

शाण्डिल्य १।११*
ध्यातृध्याने विहाय निवातस्थितदीपवद्ध्येयैकगोचरं चित्तं समाधिः ॥ २॥

पैङ्गल ३*
मनः प्रचारशून्यं परमात्मनि लीनं भवति ॥ ३॥

मण्डलब्राह्मण ३।१
प्राप्ते ज्ञानेन विज्ञाने ज्ञेये परमात्मनि हृदि संस्थिते देहे

लब्धशान्तिपदं गते तदा प्रभा मनोबुद्धिशून्यं भवति ॥ ४॥

पैङ्गल ४।९

प्राणापानयोरैक्यं कृत्वा धृतकुम्भको नासाग्रदर्शनदृढभावनया
द्विकराङ्गुलिभिः षण्मुखीकरणेन प्रणवध्वनिं निशम्य मनस्तत्र
लीनं भवति ॥ ५॥

मण्डलब्राह्मण २।२

पयःस्रवानन्तरं धेनुस्तनक्षीरमिव सर्वेन्द्रियवर्गे परिनष्टे मनोनाशं भवति ॥ ६॥

मण्डलब्राह्मण ३।१

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ॥ ७॥

मैत्रायणी ६।३०*

बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम् ॥ ८॥

कठ २।३।१०

संशान्तसर्वसङ्कल्पा या शिलावदवस्थितिः ॥ ९॥

महा ५।६

जाग्रन्निद्राविनिर्मुक्ता सा स्वरूपस्थितिः परा ॥ १०॥

महा ५।६

मारुतेमध्यसञ्चारे मनःस्थैर्यं प्रजायते ॥ ११॥

शाण्डिल्य १।५।१०

यो मनः सुस्थिरीभावः सैवावस्था मनोन्मनी ॥ १२॥

शाण्डिल्य १।५।१०

सरूपोऽसौ मनोनाशो जीवन्मुक्तस्य विद्यते ॥ १३॥

अन्नपूर्णा ४।१८

निदाघरूपनाशस्तु वर्तते देहमुक्तिके ॥ १४॥

अन्नपूर्णा ४।१८

चित्ते चैत्यदशाहीने या स्थितिः क्षीणचेतसाम् ॥ १५॥

अन्नपूर्णा २।१२

सोच्यते शान्तकलना जाग्रत्येव सुषुप्तता ॥ १६॥

अन्नपूर्णा २।१२

नैतज्जाग्रन्न च स्वप्नः सङ्कल्पानामभावनात् ॥ १७॥अन्नपूर्णा ५।१०९

सुषुप्तभावो नाप्येतदभावाज्जडतास्थितेः ॥ १८॥

अन्नपूर्णा ५।१०९

तत्त्वावबोध एवासौ वासनातृणपावकः ॥ १९॥

महा ४।१२

प्रोक्तः समाधिशब्देन न तु तूष्णीमवस्थितिः ॥ २०॥

महा ४।१२

निर्विकारतया वृत्त्या ब्रह्माकारतया पुनः ॥ २१॥

तारसार १।३७

वृत्तिविस्मरणं सम्यक्समाधिरभिधीयते ॥ २२॥

तारसार १।३७

दृश्यासम्भवबोधेन रागद्वेषादितानवे ॥ २३॥

महा ४।६२

रतिर्वलोदिता या सा समाधिरभिधीयते ॥ २४॥

महा ४।६२

अहमेव परं ब्रह्म ब्रह्माहमिति संस्थितिः ॥ २५॥

त्रिशिखिब्राह्मण १६०

समाधिः स तु विज्ञेयः सर्ववृत्तिनिरोधकः ॥ २६॥

त्रिशिखिब्राह्मण १६१

समाधिः संविदुत्पत्तिः परजीवैकतां प्रति ॥ २७॥

अन्नपूर्णा ५।७५

ध्यानस्य विस्मृतिः सम्यक्समाधिरभिधीयते ॥ २८॥

त्रिशिखिब्राह्मण ३२

समाहिता नित्यतृप्ता यथाभूतार्थदर्शिनी ॥ २९॥

अन्नपूर्णा १।४८
ब्रह्मन्समाधिशब्देन परा प्रज्ञोच्यते बुधैः ॥ ३०॥

अन्नपूर्णा १।४८
अक्षुब्धा निरहङ्कारा द्वन्द्वेष्वननुपातिनी ॥ ३१॥

अन्नपूर्णा १।४९
ब्रह्मन्समाधि शब्देन मेरोः स्थिरतरा स्थितिः ॥ ३२॥

अन्नपूर्णा १।४९
निश्चिता विगताऽभीष्टा हेयोपादेयवर्जिता ॥ ३३॥

अन्नपूर्णा १।५०
ब्रह्मन्समाधि शब्देन परिपूर्णमनोगतिः ॥ ३४॥

अन्नपूर्णा १।५०
सलिले सैन्धवं यद्वत्साम्यं भजति योगतः ॥ ३५॥

वराह २।७५*
तथात्ममनसोरैक्यं समाधिरभिधीयते ॥ ३६॥

सौभाग्यलक्ष्मी २।१४
यत्समत्वं तयोरत्र जीवात्मपरमात्मनोः ॥ ३७॥

सौभाग्यलक्ष्मी २।१६
समस्तनष्टसङ्कल्पः समाधिरभिधीयते ॥ ३८॥

सौभाग्यलक्ष्मी २।१६
प्रभाशून्यं मनःशून्यं बुद्धिशून्यं निरामयम् ॥ ३९॥

सौभाग्यलक्ष्मी २।१७
सर्वशून्यं निराभासं समाधिरभिधीयते ॥ ४०॥

सौभाग्यलक्ष्मी २।१७

ब्रह्माकारमनोवृत्तिप्रवाहोऽहङ्कृतिं विना ॥ ४१॥

मुक्तिका २।५३*
संप्रज्ञातसमाधिः स्याद्ध्यानाभ्यासप्रकर्षतः ॥ ४२॥

मुक्तिका २।५४
प्रशान्तवृत्तिकं चित्तं परमानन्ददीपकम् ॥ ४३॥

मुक्तिका २।५४*
असंप्रज्ञातनामायं समाधिर्योगिनां प्रियः ॥ ४४॥

मुक्तिका २,५४
स्वानुभूतिरसावेशाद्दृश्यशब्दावुपेक्षितुः ॥ ४५॥

सरस्वतीरहस्य २।२८*
निर्विकल्पसमाधिः स्यान्निवातस्थितदीपवत् ॥ ४६॥

सरस्वतीरहस्य २।२९
प्रभाशून्यं मनःशून्यं बुद्धिशून्यं चिदात्मकम् ॥ ४७॥

मुक्तिका २।५५
अतद्व्यावृत्तिरूपोऽसौ समाधिर्मुनिभावितः ॥ ४८॥

मुक्तिका २।५५
ऊर्ध्वपूर्णमधःपूर्णं मध्यपूर्णं शिवात्मकम् ॥ ४९॥

मुक्तिका २।५६
साक्षाद्विधिमुखो ह्येष समाधिः पारमार्थिकः ॥ ५०॥

मुक्तिका २।५६
इति सार्धान्तिकसमाधिवाक्यानि पञ्चाशत् ॥ ५०॥

दशमं प्रकरणं समाप्तम् ।

११ अथ सार्धान्तिकाष्टविधिस्वरूपवाक्येषु नानालिङ्गस्वरूपवाक्यानि ॥ (३२)
श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणः ॥ १॥

केन २*

यो वै भूमा तत्सुखम् ॥ २॥

छान्दोग्य ७।२३।१*

यो वै भूमा तदमृतम् ॥ ३॥

छान्दोग्य ७।२४।१

नेति नेति नह्येतस्मादिति नेत्यन्यत्परमस्त्यथ नामधेय
सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेव सत्यम् ॥ ४॥

बृहदारण्यक २।३।६*

रातेर्दातुः परायणम् ॥ ५॥

महा २।९

स पर्यगाच्छुक्रमकायमव्रणमस्नाविर शुद्धमपापविद्धम् ॥ ६॥

ईश ८*

प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः ॥ ७॥

माण्डुक्यकारिका १।२६*

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ॥ ८॥

आत्म ३१*

न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ ९॥

अमृतबिन्दु ३।१०

अखण्डैकरसं शास्त्रमखण्डैकरसा त्रयी ॥ १०॥

तेजोबिन्दु २।३

अखण्डैकरसो देह अखण्डैकरसं मनः ॥ ११॥

तेजोबिन्दु २।७

अखण्डैकरसं सूत्रमखण्डैकरसो विराट् ॥ १२॥

तेजोबिन्दु २।१४

अखण्डैकरसा विद्या ह्यखण्डैकरसोऽव्ययः ॥ १३॥

तेजोबिन्दु २।८

अखण्डैकरसं गोप्यमखण्डैकरसः शशी ॥ १४॥

तेजोबिन्दु २।१६

अखण्डैकरसं क्षेत्रमखण्डैकरसा क्षमा ॥ १५॥

तेजोबिन्दु २।१७

अखण्डैकरसास्तारा अखण्डैकरसो रविः ॥ १६॥

तेजोबिन्दु २।१७

अखण्डैकरसो ज्ञाता अखण्डैकरसा स्थितिः ॥ १७॥

तेजोबिन्दु २।१२

अखण्डैकरसा माता अखण्डैकरसः पिता ॥ १८॥

तेजोबिन्दु २।१३

अखण्डैकरसो राजा अखण्डैकरसं पुरम् ॥ १९॥

तेजोबिन्दु २।१९

अखण्डैकरसं तारमखण्डैकरसो जपः ॥ २०॥

तेजोबिन्दु २।२०

सर्ववर्जितचिन्मात्रं त्वत्ता मत्ता च चिन्मयम् ॥ २१॥

तेजोबिन्दु २।२६

आदिरन्तं च चिन्मात्रं गुरुशिष्यादि चिन्मयम् ॥ २२॥

तेजोबिन्दु २।३१

दृग्दृश्यं यदि चिन्मात्रमस्ति चेच्चिन्मयं सदा ॥ २३॥

तेजोबिन्दु २।३१

सर्वाश्चर्यं च चिन्मात्रं देहश्चिन्मात्रमेव हि ॥ २४॥

तेजोबिन्दु २।३२

अहं त्वं चैव चिन्मात्रं मूर्तामूर्तादि चिन्मयम् ॥ २५॥

तेजोबिन्दु २।३३

पुण्यं पापं च चिन्मात्रं जीवश्चिन्मात्रविग्रहः ॥ २६॥

तेजोबिन्दु २।३३
देहत्रयविहीनत्वात्कालत्रयविवर्जनात् ॥ २७॥

तेजोबिन्दु ५।१७*
जीवत्रयगुणाभावात्तापत्रयविवर्जनात् ॥ २८॥

तेजोबिन्दु ५।१८
लोकत्रयविहीनत्वात्सर्वमात्मेति शासनात् ॥ २९॥

तेजोबिन्दु ५।१८
चित्ताभावाच्चिन्तनीयं देहाभावाज्जरा न च ॥ ३०॥

तेजोबिन्दु ५।१९*
पादाभावाद्गतिर्नास्ति हस्ताभावात्क्रिया न च ॥ ३१॥

तेजोबिन्दु ५।१९
मृत्युर्नास्ति जनाभावाद्बुद्ध्यभावात्सुखादिकम् ॥ ३२॥

तेजोबिन्दु ५।२०
इति सार्धान्तिकनानालिङ्गस्वरूपवाक्यानि द्वात्रिंशत् ॥ ३२॥

एकादशं प्रकरणं समाप्तम् ।

१२ अथ सार्धान्तिकपुंलिङ्गस्वरूपवाक्यानि । (३०)
स एषोऽकलोऽमृतः ॥ १॥

प्रश्न ६।५*
नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं
न प्रज्ञंनाप्रज्ञमदृश्यमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यम्-
अव्यपदेश्यमैकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं
शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः ॥ २॥

रामोत्तरतापिनी ३।५*
अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैतः ॥ ३॥

माण्डुक्य १२*

यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा ॥ ४॥

छान्दोग्य ७।२४।१*

स एष नेतिनेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्यो न हि
शीर्यतेऽसङ्गोन हि सज्यतेऽसितो न व्यथते न रिष्यति ॥ ५॥

बृहदारण्यक ३।९।२६*

रसघन एवैवं वाऽरेयमात्मानन्तरोऽबाह्यः कृत्स्नः
प्रज्ञानघन एव ॥ ६॥

बृहदारण्यक ४।५।१३*

तस्मान्मनो विलीने मनसि गते सङ्कल्पविकल्पे दग्धे पुण्यपापे सदाशिवः
ॐ शक्त्यात्मकः सर्वत्रावस्थितिः स्वयंज्योतिः शुद्धो नित्यो निरञ्जनः
शान्ततमः प्रकाशयति ॥ ७॥

हंस २*

एष शुद्धः पूतः शून्यः शान्तोऽप्राणोऽनीशात्मानन्तोऽक्षयः स्थिरः
शाश्वतोऽजः स्वतन्त्रः स्वे महिम्नि तिष्ठति ॥ ८॥

मैत्रायणी २।४; ६।२८

चक्षुषो द्रष्टा श्रोत्रस्य द्रष्टा मनसो द्रष्टा वाचो द्रष्टा
बुद्धेर्द्रष्टा प्राणस्य द्रष्टा तमसो द्रष्टा सर्वस्य द्रष्टा ततः
सर्वस्मादन्यो विलक्षणः सद्घनोऽयं चिद्घन आनन्दघन
एवैकरसोऽव्यवहार्यः ॥ ९॥

नृसिंहतापिनी २।२।१

सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभुरद्वयानन्दः
परः प्रत्यगेकरसः ॥ १०॥

नृसिंहतापिनी २।९।१

अदृष्टोऽव्यवहार्योऽप्यल्पो नाल्पः साक्ष्यविशेषःसर्वज्ञोऽनन्तोऽभिन्नोऽद्वयो
विदिताविदितात्परः ॥ ११॥

नृसिंहतापिनी २।९।१

शुद्धो देव एको नारायणो न द्वितीयोऽस्ति कश्चित् ॥ १२॥

त्रिपाद्विभूतिमहानारायण १

अचक्षुर्विश्वतश्चक्षुरकर्णो विश्वतःकर्ण अपादो विश्वतःपाद

अपाणिर्विश्वतःपाणिरहमशिरा विश्वतःशिरा विद्यामात्रैकसंश्रयो विद्यारूपः ॥ १३॥

भस्मजाबाल २

दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः ॥ १४॥

मुण्डक २।१।२

अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥ १५॥

मुण्डक २।१।२

अद्वैतः सर्वभावानां देवस्तुर्यो विभुः स्मृतः ॥ १६॥

माण्डुक्यकारिका १।१०

अपूर्वोऽनन्तरोऽबाह्यो न परः प्रणवोऽव्ययः ॥ १७॥

माण्डुक्यकारिका १।२६

अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः ॥ १८॥

माण्डुक्यकारिका १।२९

कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥ १९॥

ब्रह्म

सर्वसङ्कल्परहितः सर्वनादमयः शिवः ॥ २०॥

तेजोबिन्दु ५।२

सर्ववर्जितचिन्मात्रः सर्वानन्दमयः परः ॥ २१॥

तेजोबिन्दु ५।२

सर्वानुभवनिर्मुक्तः सर्वध्यानविवर्जितः ॥ २२॥

तेजोबिन्दु ५।३

आत्माऽनात्मविवेकादिभेदाभेदविवर्जितः ॥ २३॥

तेजोबिन्दु ५।४

महावाक्यार्थतो दूरो ब्रह्मास्मीत्यतिदूरतः ॥ २४॥

तेजोबिन्दु ५।५

तच्छब्दवर्ज्यस्त्वंशब्दहीनो वाक्यार्थवर्जितः ॥ २५॥

तेजोबिन्दु ५।६

क्षराक्षरविहीनो यो नादान्तर्ज्योतिरेव सः ॥ २६॥

तेजोबिन्दु ५।६

अखण्डैकरसो वाहमानन्दोऽस्मीतिवर्जितः ॥ २७॥

तेजोबिन्दु ५।७

दृश्यदर्शननिर्मुक्तः केवलामलरूपवान् ॥ २८॥

महा ६।७९

नित्योदितो निराभासो द्रष्टा साक्षी चिदात्मकः ॥ २९॥

महा ६।८०

स एव विदितादन्यस्तथैवाविदितादपि ॥ ३०॥

पाशुपतब्रह्म १३

इति सार्धान्तिकपुंलिङ्गस्वरूपवाक्यानि त्रिंशत् ॥ ३०॥

द्वादशं प्रकरणं समाप्तम्

१३ अथ सार्धान्तिकस्त्रीलिङ्गस्वरूपवाक्यानि । (१२)

अलौकिकपरमानन्दलक्षणाखण्डामिततेजोराशिः ॥ १॥

त्रिपाद्विभूतिमहानारायण ८

भावाभावकलाविनिर्मुक्ता चिद्विद्याऽद्वितीयब्रह्मसंवित्तिः
सच्चिदानन्दलहरी महात्रिपुरसुन्दरी बहिरन्तरप्रविश्य
स्वयमेकैव विभाति ॥ २॥

बह्वृचा

सर्वसङ्कल्परहिता सर्वसंज्ञाविवर्जिता ॥ ३॥

महा ५।१००

सैषा चिदविनाशात्मा स्वात्मेत्यादिकृता भिधा ॥ ४॥

महा ५।१००

आकाशशतभागाच्छा ज्ञेषु निष्कलरूपिणी ॥ ५॥

महा ५।१०१

नास्तमेति न चोदेति नोत्तिष्ठति न तिष्ठति ॥ ६॥

महा ५।१०२

न च याति न चायाति न च नेह चेह चित् ॥ ७॥

महा ५।१०२

सैषा चिदमलाकारा निर्विकल्पा निरास्पदा ॥ ८॥

महा ५।१०३

महाचिदेकैवेहास्ति महासत्तेति चोच्यते ॥ ९॥

अन्नपूर्णा ५।५५

निष्कलङ्का समा शुद्धा निरहङ्काररूपिणी ॥ १०॥

अन्नपूर्णा ५।५५

सकृद्विभाता विमला नित्योदयवती समा ॥ ११॥

अन्नपूर्णा ५।५६

सा ब्रह्मपरमात्मेति नामभिः परिगीयते ॥ १२॥

अन्नपूर्णा ५।५६

इति स्त्रीलिङ्गस्वरूपवाक्यानि द्वादश ॥ १२॥

त्रयोदशं प्रकरणं समाप्तम् ।

१४ अथ सार्धान्तिकनपुंसकलिङ्गस्वरूपवाक्यानि ॥(३९)

अन्यदेव तद्विदितादथो अविदितादधि ॥ १॥

केन ४

यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् ॥ २॥मुण्डक १।१।६

सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ॥ ३॥

पैङ्गल १

अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाश-

मसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राण-
ममुखममात्रमनन्तरमबाह्यम् ॥ ४॥

बृहदारण्यक ३।७।८
नित्यं शुद्धं मुक्तं सत्यं सूक्ष्मं परिपूर्णमद्वयं
सदानन्दचिन्मात्रं पुरतः सुविभातमद्वैतमचिन्त्यमलिङ्गं
स्वप्रकाशमानन्दघनम् ॥ ५॥

नृसिंहतापिनी २।९।१
एतदध्यशब्दमस्पर्शमरूपमरसमगन्धमवक्तव्यमदातव्यमगन्तव्य-
मविसर्जयितव्यमनानन्दयितव्यममन्तव्यमबोद्धव्यमनहङ्कर्तयितव्य-
मचेतयितव्यमप्राणमितव्यमपानयितव्यमव्यानयितव्यमनुदानयितव्य-
मसमानयितव्यमनिन्द्रियमविषयमकरणमलक्षणमसङ्गमगुण-
मविक्रियमव्यपदेश्यमसत्त्वमरजस्कमतमस्कममायमभयम-
प्यौपनिषदमेव सुविभातं सकृद्विभातं पुरतोऽस्मात्सुविभातमद्वयम् ॥ ६॥

नृसिंहतापिनी २।९।१
अनिर्वचनीयं ज्योतिः सर्वव्यापकं निरतिशयानन्दलक्षणं परमाकाशम् ॥ ७॥

मण्डलब्राह्मण ४।१
तद्ब्रह्म तापत्रयातीतं षट्कोशविनिर्मुक्तं षडूर्मिवर्जितं
पञ्चकोशातीतं षड्भावविकारशून्यमेवमादिसर्वं विलक्षणम् ॥ ८॥

मुद्गल ४
? निरुपप्लवं ज्योतिराभ्यन्तरं सर्वमायातीतमप्रत्यगेकरसमद्वितीयम् ॥ ९॥????
????
???? तज्ज्योतिरेकमद्वितीयं सर्वकल्पनातीतं ध्रुवमक्षरमेकं
सदा चकास्ति सच्चिदानन्दम् ॥ १०॥ ????
????
यत्तत्सत्यं विज्ञानमानन्दं निष्क्रियं निरञ्जनं सर्वगतं सुसूक्ष्मं
सर्वतोमुखनिर्देश्यममृतं निष्कलम् रूपम्॥ ११॥

शाण्डिल्य ३।१
एकमद्वैतं निष्कलं निष्क्रियं शान्तं निरतिशयमनामयमद्वैतं
चतुर्थं ब्रह्मविष्णुरुद्रातीतमेकमाशास्यम् ॥ १२॥

भस्मजाबाल १
अद्वयमनाद्यन्तमशेषवेदवेदान्तवेद्यमनिर्देश्यमनिरुक्तमप्रच्यव-

माशास्यमद्वैतं चतुर्थं सर्वाधारमनाधारमनिरीक्ष्यम् ॥ १३॥

भस्मजाबाल २

अशब्दमस्पर्शमरूपमव्ययं तथाऽरसन्नित्यमगन्धवच्च यत् ॥ १४॥

कठ १।३।१५

परं विज्ञानाद्यद्वरिष्ठं प्रजानां यदर्चिमद्यदणुभ्योऽणु च ॥ १५॥

मुण्डक २।२।१-२

बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति ॥ १६॥

मुण्डक ३।१।४

एतज्ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किञ्चित् ॥ १७॥

नारदपरिव्राजक ९।११

अघोषमव्यञ्जनमस्वरं च यत्तालुकण्ठोष्ठमनासिकं च यत् ॥ १८॥

अमृतनाद २५

अरेफजातमुभयोष्मवर्जितं यदक्षरं न क्षरते कथञ्चित् ॥ १९॥

अमृतनाद २५

अगोचरं मनोवाचामवधूतादिसंप्लवम् ॥ २०॥

मैत्रेयी १।९

सत्तामात्रप्रकाशैकप्रकाशं भावनातिगम् ॥ २१॥

मैत्रेयी १।९

अहेयमनुपादेयमसामान्यविशेषणम् ॥ २२॥

मैत्रेयी १।१०

ध्रुवं स्तिमितगम्भीरं न तेजो न तमस्ततम् ॥ २३॥

महा २।६५

निष्कलं निर्मलं शान्तं सर्वातीतं निरामयम् ॥ २४॥

योगशिखा १।५

न शून्यं नापि चाकारि न दृश्यं नापि दर्शनम् ॥ २५॥

महा २।६६

चिन्मात्रं चैत्यरहितमनन्तमजरं शिवम् ॥ २६॥

महा २।६८

चैत्यानुपातरहितं सामान्येन च सर्वगम् ॥ २७॥

महा ४।११८

अनामयमनाभासमनामकमकारणम् ॥ २८॥

महा ५।४५

मनोवचोभ्यामग्राह्यं पूर्णात्पूर्णं सुखात्सुखम् ॥ २९॥

महा ५।४६

द्रष्टृदर्शनदृश्यादिवर्जितं तदिदं पदम् ॥ ३०॥

महा ५।४८

शुद्धं सूक्ष्मं निराकारं निर्विकारं निरञ्जनम् ॥ ३१॥

योगशिखा २।१७

अप्रमाणमनिर्देश्यमप्रमेयमतीन्द्रियम् ॥ ३२॥

योगशिखा ३।१८

निर्लेपकं निरापायं कूटस्थमचलं ध्रुवम् ॥ ३३॥

योगशिखा ३।२१

सद्घनं चिद्घनं नित्यमानन्दघनमव्ययम् ॥ ३४॥

अध्यात्म ६१

प्रत्यगेकरसं पूर्णमनन्तं विश्वतोमुखम् ॥ ३५॥

अध्यात्म ६१

अहेयमनुपादेयमनादेयमनाश्रयम् ॥ ३६॥

अध्यात्म ६२

शुद्धं बुद्धं सदा मुक्तमनामकमरूपकम् ॥ ३७॥

तेजोबिन्दु ६।७०

सङ्कल्पसङ्क्षयवशाद्गलिते तु चित्ते संसारमोहमिहिका गलिता भवन्ति ॥ ३८॥

महा ५।५३
स्वच्छं विभाति शरदीव खमागतायां चिन्मात्रमेकमजमाद्यमनन्तमन्तः ॥ ३९॥

महा ५।५३
इति सार्धान्तिकनपुंसकलिङ्गस्वरूपवाक्यान्येकोनचत्वारिंशत् ॥३९॥

चतुर्दशं प्रकरणं समाप्तम् ।

१५ अथ सार्धान्तिकात्मस्वरूपमहावाक्यानि । (४०)
आकाशो ह वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा ॥ १॥

छान्दोग्य ८।१४।१
इदं सर्वं यदयमात्मा ॥ २॥

नृसिंहतापिनी २।५।१
चिदेकरसो ह्ययमात्मा ॥ ३॥

नृसिंहतापिनी २।२।१
अतो ह्ययमात्मा ॥ ४॥

नृसिंहतापिनी २।२।१
अनुज्ञाता ह्ययमात्मा ॥ ५॥

नृसिंहतापिनी २।८।१
अनुज्ञैकरसो ह्ययमात्मा ॥ ६॥

नृसिंहतापिनी २।८।१
अविकल्पो ह्ययमात्मा ॥ ७॥

नृसिंहतापिनी २।८।१
देहादेः परतरत्वाद्ब्रह्मैव परमात्मा ॥ ८॥

निरलम्ब
अखण्डैकरसो ह्ययमात्मा ॥ ९॥

तेजोबिन्दु २।६
निर्गुणः साक्षीभूतो निष्क्रियो निरवयवात्मा ॥ १०॥

आत्म १
विरजः पर आकाशादज आत्मा महान् ध्रुवः ॥ ११॥

बृहदारण्यक ४।४।२०
एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ॥ १२॥

श्वेताश्वतर ६।११
निःशब्दं परमं ब्रह्म परमात्मा समीर्यते ॥ १३॥

नाद्बिन्दु ४८
सकले निष्कले भावे सर्वत्रात्माव्यवस्थितः ॥ १४॥

ध्यानबिन्दु ८
सर्वदा सर्वकृत्सर्वः परमात्मेत्युदाहृतः ॥ १५॥

महा ४।५६
अनाद्यन्तावभासात्मा परमात्मेह विद्यते ॥ १६॥

अन्नपूर्णा २।३४
नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः ॥ १७॥

अन्नपूर्णा ५।७५
तत्परः परमात्मा च श्रीरामः पुरुषोत्तमः ॥ १८॥

तारसार २।४
सर्वकारणकार्यात्मा कार्यकारणवर्जितः ॥ १९॥

तेजोबिन्दु ५।१
सर्वातीतस्वभावात्मा नादान्तर्ज्योतिरेव सः ॥ २०॥

तेजोबिन्दु ५।७
निर्विकल्पस्वरूपात्मा सविकल्पविवर्जितः ॥ २१॥

तेजोबिन्दु ४।७५

सदा समाधिशून्यात्मा आदिमध्यान्तवर्जितः ॥ २२॥

तेजोबिन्दु ४।७६

प्रज्ञानवाक्यहीनात्मा अहं ब्रह्मास्मिवर्जितः ॥ २३॥

तेजोबिन्दु ४।७७

तत्त्वमस्यादिहीनात्मा अयमात्मेत्यभावकः ॥ २४॥

तेजोबिन्दु ४।७७

ओङ्कारवाच्यहीनात्मा सर्ववाच्यविवर्जितः ॥ २५॥

तेजोबिन्दु ४।७८

सर्वत्र पूर्णरूपात्मा सर्वत्रात्मावशेषकः ॥ २६॥

तेजोबिन्दु ४।५

शुद्धचैतन्यरूपात्मा सर्वसङ्गविवर्जितः ॥ २७॥

तेजोबिन्दु ४।६

आनन्दात्मा प्रियो ह्यात्मा मोक्षात्मा बन्धवर्जितः ॥ २८॥

तेजोबिन्दु ४।३६

शून्यात्मा सूक्ष्मरूपात्मा विश्वात्मा विश्वहीनकः ॥ २९॥

तेजोबिन्दु ४।४३

सत्तामात्रस्वरूपात्मा नान्यत्किञ्चिज्जगद्भयम् ॥ ३०॥

तेजोबिन्दु ४।४५

अपरिच्छिन्नरूपात्मा अणुस्थूलादिवर्जितः ॥ ३१॥

तेजोबिन्दु ४।४८

नामरूपविहीनात्मा परसंवित्सुखात्मकः ॥ ३२॥

तेजोबिन्दु ४।४९

साक्ष्यसाक्षित्वहीनात्मा किञ्चित्किञ्चिन्न किञ्चन ॥ ३३॥

तेजोबिन्दु ४।५१

मुक्तामुक्तस्वरूपात्मा मुक्तामुक्तविवर्जितः ॥ ३४॥

तेजोबिन्दु ४।६५
द्वैताद्वैतस्वरूपात्मा द्वैताद्वैतादिवर्जितः ॥ ३५॥

तेजोबिन्दु ४।६६
निष्कलात्मा निर्मलात्मा बुद्ध्यात्मा पुरुषात्मकः ॥ ३६॥

तेजोबिन्दु ४।६८
आत्मेतिशब्दहीनो य आत्मशब्दार्थवर्जितः ॥ ३७॥

तेजोबिन्दु ५।८
सच्चिदानन्दहीनो य एषैवात्मा सनातनः ॥ ३८॥

तेजोबिन्दु ५।८
यस्य किञ्चिद्बहिर्नास्ति किञ्चिदन्तः कियन्न च ॥ ३९॥

तेजोबिन्दु ५।९
यस्य लिङ्गं प्रपञ्चं वा ब्रह्मैवात्मा न संशयः ॥ ४०॥

तेजोबिन्दु ५।१०
इति सार्धान्तिकात्मस्वरूपवाक्यानि चत्वारिंशत् ॥ ४०॥

पञ्चदशं प्रकरणं समाप्तम् ।

## १६ अथ सार्धान्तिकसर्वस्वरूपवाक्यानि ॥ (४०)

ॐकार एवेदं सर्वम् ॥ १॥

छान्दोग्य २।२३।३
स एवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स
दक्षिणतः स उत्तरतः स एवेदं सर्वम् ॥ २॥

छान्दोग्य ७।२५।१
अहमेवाधस्तादहमुपरिष्टादहं पश्चादहं
पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदं सर्वम् ॥ ३॥

छान्दोग्य ७।२५।१
आत्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा

दक्षिणत आत्मोत्तरत आत्मैवेदं सर्वम् ॥ ४॥

छान्दोग्य ७।२५।२

आत्मैवेदममृतमिदं ब्रह्मेदं सर्वम् ॥ ५॥

छान्दोग्य ७।२५।२

एतद्ब्रह्मैतत्सर्वम् ॥ ६॥

बृहदारण्यक ५।१।१

????? नारायण एवेदं सर्वम् ॥ ७॥ ????

???? नारायणोत्तर्तापिनी १।५

सच्चिदानन्दरूपमिदं सर्वम् ॥ ८॥

नृसिंहतापिनी २।७।१

सत्तामात्रं हीदं सर्वम् ॥ ९॥

नृसिंहतापिनी ९

मत्स्वरूपमेवेदं सर्वम् ॥ १०॥

त्रिपाद्विभूतिनारायण ८

स एव सर्वं यद्भूतं यच्च भव्यं सनातनम् ॥ ११॥

कैवल्य १।९

स्वयं ब्रह्मा स्वयं विष्णुः स्वयमिन्द्रः स्वयं शिवः ॥ १२॥

अध्यात्म २०

स्वयं विश्वमिदं सर्वं स्वस्मादन्यन्न किञ्चन ॥ १३॥

अध्यात्म २०

मरुभूमौ जलं सर्वं मरुभूमात्रमेव तत् ॥ १४॥

महा ४।८४

जगत्त्रयमिदं सर्वं चिन्मात्रं स्वविचारतः ॥ १५॥

महा ४।८४

भववर्जितचिन्मात्रं सर्वं चिन्मात्रमेव हि ॥ १६॥

तेजोबिन्दु २।२५

यत्किञ्चिद्यन्न किञ्चिच्च सर्वं चिन्मात्रमेव हि ॥ १७॥

तेजोबिन्दु २।२७

अखण्डैकरसं सर्वं यद्यच्चिन्मात्रमेव हि ॥ १८॥

तेजोबिन्दु २।२८

भूतं भव्यं भविष्यच्च सर्वं चिन्मात्रमेव हि ॥ १९॥

तेजोबिन्दु २।२८

ज्ञाता चिन्मात्ररूपश्च सर्वं चिन्मात्रमेव हि ॥ २०॥

तेजोबिन्दु २।२९

यच्च यावच्च दूरस्थं सर्वं चिन्मात्रमेव हि ॥ २१॥

तेजोबिन्दु २।३९

चिन्मात्रान्नास्ति लक्ष्यं च सर्वं चिन्मात्रमेव हि ॥ २२॥

तेजोबिन्दु २।४१

आत्मनोऽन्या गतिर्नास्ति सर्वमात्ममयं जगत् ॥ २३॥

तेजोबिन्दु ६।४६

आत्मनोऽन्यत्तुषं नास्ति सर्वमात्ममयं जगत् ॥ २४॥

तेजोबिन्दु ६।४६

सर्वमात्मैव शुद्धात्मा सर्वं चिन्मात्रमद्वयम् ॥ २५॥

तेजोबिन्दु ६।३९

सर्वं च खल्विदं ब्रह्म नित्यचिद्घनमक्षतम् ॥ २६॥

महा ४।११९

समस्तं खल्विदं ब्रह्म सर्वमात्मेदमाततम् ॥ २७॥

महा ६।१२

न त्वं नाहं न चान्यं वा सर्वं ब्रह्मैव केवलम् ॥ २८॥

तेजोबिन्दु ६।४

न तदस्ति न यत्राहं न तदस्ति न तन्मयम् ॥ २९॥

महा ६।११

किमन्यदभिवाञ्छामि सर्वं सच्चिन्मयं ततम् ॥ ३०॥

महा ६।११

भ्रान्तिरभ्रान्तिर्नास्त्येव सर्वं ब्रह्मैव केवलम् ॥ ३१॥

तेजोबिन्दु ५।४२

न देहो न च कर्माणि सर्वं ब्रह्मैव केवलम् ॥ ३२॥

तेजोबिन्दु ६।१०५

लक्षणात्रयविज्ञानं सर्वं ब्रह्मैव केवलम् ॥ ३३॥

तेजोबिन्दु ६।१०६

जगन्नाम्नाचिदाभाति सर्वं ब्रह्मैव केवलम् ॥ ३४॥

योगशिखा ४।१८

ब्रह्ममात्रमिदं सर्वं ब्रह्म मात्रमसन्न हि ॥ ३५॥

तेजोबिन्दु ६।४७

ब्रह्ममात्रं वृत्तं सर्वं ब्रह्ममात्रं रसं सुखम् ॥ ३६॥

तेजोबिन्दु ६।४८

ब्रह्ममात्रं श्रुतं सर्वं स्वयं ब्रह्मैव केवलम् ॥ ३७॥

तेजोबिन्दु ६।४८

ब्रह्मैव सर्वं चिन्मात्रं ब्रह्ममात्रं जगत्त्रयम् ॥ ३८॥

तेजोबिन्दु ६।४२

सर्वं प्रशान्तमजमेकमनादिमध्यमाभास्वरं स्वदनमात्रमचैत्य-
मचिह्नम् ॥ ३९॥

महा ४।१०

सर्वं प्रशान्तमिति शब्दमयी च दृष्टिर्बोधार्थमेव हि मुधैव
तदोमितीदम् ॥ ४०॥

महा ४।१०

इति सार्धान्तिकसर्वस्वरूपवाक्यानि चत्वारिंशत् ॥ ४०॥

षोडशं प्रकरणं समाप्तम् ।

## १७ अथ सार्धान्तिकब्रह्मस्वरूपवाक्यानि । (९४)

सर्वं ह्येतद् ब्रह्म ॥ १॥

रामोत्तरतापिनी ३।५

अयमात्मा ब्रह्म ॥ २॥

शुकरहस्य २।१।४

सत्यं ज्ञानमनन्तं ब्रह्म ॥ ३॥

तैत्तिरीय २।१

प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म ॥ ४॥

आत्मबोध १

तदेतद्ब्रह्माऽपूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः ॥ ५॥

बृहदारण्यक २।५।१९

विज्ञानमानन्दं ब्रह्म ॥ ६॥

बृहदारण्यक ३।९।२८

अजरोऽमरोऽमृतोऽभयो ब्रह्माभयं वै ब्रह्म ॥ ७॥

गोपालतापिनी २।९

सर्वभूतस्थमेकं नारायणं कारणंपुरुषमकारणं परं ब्रह्मोम् ॥ ८॥

आत्मबोध १

स्वयं प्रकाशः स्वयं ब्रह्म ॥ ९॥

अथर्वशिखा ३

तदेतदद्वयं स्वयंप्रकाशमहानन्दमात्मैवैतदभय-
ममृतमेतद्ब्रह्म ॥ १०॥

नृसिंहतापिनी २।८।१

सदेव पुरस्तात्सिद्धं ब्रह्म ॥ ११॥

नृसिंहतापिनी २।९।१
आकाशवत्सूक्ष्मं केवलसत्तामात्रस्वभावं परं ब्रह्म ॥ १२॥

सर्वसार १
अद्वितीयमखिलोपाधिविनिर्मुक्तं तत्सकलशक्त्युपबृंहितमनाद्यनन्तं
नित्यं शिवं शान्तं निर्गुणमित्यादिवाच्यमनिर्वाच्यं चैतन्यं ब्रह्म ॥ १३॥

निरलम्ब
एकमेवाद्वितीयं ब्रह्म ॥ १४॥

त्रिपाद्विभूतिमहानारायण ३
सर्वदानवच्छिन्नं परं ब्रह्म ॥ १५॥

योगचूडामणि ७२
सच्चिदानन्दतेजःरूपं तारकं ब्रह्म ॥ १६॥

मण्डलब्राह्मण १।२
तन्नित्यमुक्तमविक्रियं सत्यज्ञानानन्तानन्दपरिपूर्णं
सनातनमेकमेवाद्वितीयं ब्रह्म ॥ १७॥

पैङ्गल १
चित्स्वरूपं निरञ्जनं परं ब्रह्म ॥ १८॥

त्रिपाद्विभूतिमहानारायण ७
तत्त्वंपदलक्ष्यं प्रत्यगभिन्नं ब्रह्म ॥ १९॥

पैङ्गल ३
अखण्डार्थं परं ब्रह्म ॥ २०॥

बह्वृचा
सर्वकालाबाधितं ब्रह्म ॥ २१॥

त्रिपाद्विभूतिमहानारायण १
सगुणनिर्गुणस्वरूपं ब्रह्म ॥ २२॥

त्रिपाद्विभूतिमहानारायण १
आदिमध्यान्तशून्यं ब्रह्म ॥ २३॥

त्रिपाद्विभूतिमहानारायण १
मायातीतगुणातीतं ब्रह्म ॥ २४॥

त्रिपाद्विभूतिमहानारायण १
अनन्तमप्रमेयाखण्डपरिपूर्णं ब्रह्म ॥ २५॥

त्रिपाद्विभूतिमहानारायण १
अद्वितीयपरमानन्दनित्यशुद्धबुद्धमुक्तसत्यस्वरूपव्यापकाभिन्नापरि-ह्छिन्नं ब्रह्म ॥ २६॥

त्रिपाद्विभूतिमहानारायण १
सच्चिदानन्दस्वप्रकाशं ब्रह्म ॥ २७॥

त्रिपाद्विभूतिमहानारायण १
मनोवाचामगोचरं ब्रह्म ॥ २८॥

त्रिपाद्विभूतिमहानारायण १
देशतः कालतो वस्तुतः परिच्छेदरहितं ब्रह्म ॥ २९॥

त्रिपाद्विभूतिमहानारायण १
अखिलप्रमाणागोचरं ब्रह्म ॥ ३०॥

त्रिपाद्विभूतिमहानारायण १
तुरीयं निराकारमेकं ब्रह्म ॥ ३१॥

त्रिपाद्विभूतिमहानारायण १
अद्वैतमनिर्वाच्यं ब्रह्म ॥ ३२॥

त्रिपाद्विभूतिमहानारायण १
शिवं प्रशान्तममृतं ब्रह्मयोनिम् ॥ ३३॥

कैवल्य १।६
यदेकमक्षरं निष्क्रियं शिवं सन्मात्रं परं ब्रह्म ॥ ३४॥
शाण्डिल्य ३।१
असावादित्यो ब्रह्म ॥ ३५॥

सूर्य
ॐमित्येतदक्षरं परं ब्रह्म ॥ ३६॥

तारसार २।१

ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण ॥ ३७॥

मुण्डक २।२।११

अधश्चोर्ध्वं प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥ ३८॥

मुण्डक २।२।११

तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् ॥ ३९॥

अमृतबिन्दु ८

चैतन्यमेकं ब्रह्मातः प्रज्ञानं ब्रह्म मय्यपि ॥ ४०॥

शुकरहस्य २।२

ब्रह्मशब्देन तद्ब्रह्म स्वप्रकाशात्मरूपकम् ॥ ४१॥

शुकरहस्य २।८

एतद्भावविनिर्मुक्तं तद्ग्राह्यं ब्रह्म तत्परम् ॥ ४२॥

तारसार १।१४

चिन्मात्रात्परमं ब्रह्म चिन्मात्रान्नास्ति कोऽपि हि ॥ ४३॥

तेजोबिन्दु २।३५

अखण्डैकरसं ब्रह्म चिन्मात्रान्न हि विद्यते ॥ ४४॥

तेजोबिन्दु २।४१

सदोदितं परं ब्रह्म ज्योतिषामुदयो यतः ॥ ४५॥

नादबिन्दु १७

यस्मिन्प्रलीयते शब्दस्तत्परं ब्रह्म गीयते ॥ ४६॥

ब्रह्मविद्या १३

???? सर्वशक्ति परं ब्रह्म नित्यमापूर्णमद्वयम् ॥ ४७॥ ????

????

सत्ता सर्वपदार्थानां नान्या संवेदनादृते ॥ ४८॥

महा ५।४७

परं ब्रह्म परं सत्त्वं सच्चिदानन्दलक्षणम् ॥ ४९॥

योगशिखा २।१६

अक्षरं परमं ब्रह्म निर्विशेषं निरञ्जनम् ॥ ५०॥

योगशिखा ३।१६

ब्रह्मैवैकमनाद्यन्तमब्धिवत्प्रविजृम्भते ॥ ५१॥

अन्नपूर्णा ५।१०

न किञ्चिद्भावनाकारं यत्तद्ब्रह्म परं विदुः ॥ ५२॥

अन्नपूर्णा ५।४८

एकमेवाद्वयं ब्रह्म नेह ननास्ति किञ्चन ॥ ५३॥

त्रिपाद्विभूतिनारायण ३

ब्रह्मैव विद्यते साक्षाद्वस्तुतोऽवस्तुतोऽपि च ॥ ५४॥

पाशुपतब्रह्म २७

तद्विद्याविषयं ब्रह्म सत्यज्ञानसुखाद्वयम् ॥ ५५॥

अन्नपूर्णा ४।२७

शान्तं च तदतीतं च परं ब्रह्म तदुच्यते ॥ ५६॥

योगशिखा ६।६६

अनुभूतिमयं तस्मात्सारं ब्रह्मेति कथ्यते ॥ ५७॥

अन्नपूर्णा २।१७

यदिदं ब्रह्म पुच्छाख्यं सत्यज्ञानाद्वयात्मकम् ॥ ५८॥

कठरुद्र २२

सद्रूपं परमं ब्रह्म त्रिपरिच्छेदवर्जितम् ॥ ५९॥

कठरुद्र २७

तद्ब्रह्मानन्दमद्वन्द्वं निर्गुणं सत्यचिद्घनम् ॥ ६०॥

कठरुद्र ३४

सर्वाधिष्ठानमद्वन्द्वं परं ब्रह्म सनातनम् ॥ ६१॥

अन्नपूर्णा ४।२९

प्रज्ञानमेव तद्ब्रह्म सत्यप्रज्ञानलक्षणम् ॥ ६२॥

महा ४।८१

अस्तीत्युक्ते जगत्सर्वं सद्रूपं ब्रह्म तद्भवेत् ॥ ६३॥

वराह २।७१

भातीत्युक्ते जगत्सर्वं भानं ब्रह्मैव केवलम् ॥ ६४॥

वराह २।७२

ब्रह्ममात्रं चिदाकाशं सच्चिदानन्दमद्वयम् ॥ ६५॥

तेजोबिन्दु ६।४९

ब्रह्मणोऽन्यतरन्नास्ति ब्रह्मणोऽन्यज्जगन्न च ॥ ६६॥

तेजोबिन्दु ६।४९

ब्रह्मणोऽन्यदह नास्ति ब्रह्मणोऽन्यत्फलं न हि ॥ ६७॥

तेजोबिन्दु ६।५०

ब्रह्मणोऽन्यत्तृणं नास्ति ब्रह्मणोऽन्यत्पदं न हि ॥ ६८॥

तेजोबिन्दु ६।५०

ब्रह्मणोऽन्यद्गुरुर्नास्ति ब्रह्मणोऽन्यदसद्वपुः ॥ ६९॥

तेजोबिन्दु ६।५१

नित्यानन्दमयं ब्रह्म केवलं सर्वदा स्वयम् ॥ ७०॥

तेजोबिन्दु ६।१०१

बीजं मायाविनिर्मुक्तं परं ब्रह्मेति कीर्त्यते ॥ ७१॥

रामरहस्य ५।११

मद्रूपमद्वयं ब्रह्म आदिमध्यान्तवर्जितम् ॥ ७२॥

वासुदेव

सर्वत्रावस्थितं शान्तं चिद्ब्रह्मेत्यनुभूयते ॥ ७३॥

अन्नपूर्णा ५।२१

सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ॥ ७४॥

अन्नपूर्णा ५।११२
नाविद्यास्तीह नो माया शान्तं ब्रह्मेदमक्लमम् ॥ ७५॥

अन्नपूर्णा ५।११२
स्वात्मन्यारोपिताशेषाभासवस्तुनिरासतः ॥ ७६॥

अध्यात्म २१
स्वयमेव परं ब्रह्म पूर्णमद्वयमक्रियम् ॥ ७७॥

अध्यात्म २१
राम एव परं ब्रह्म राम एव परं तपः ॥ ७८॥

रमरहस्य ६
राम एव परं तत्त्वं श्रीरामो ब्रह्मतारकम् ॥ ७९॥

रामरहस्य १।६
चिद्रूपमात्रं ब्रह्मैव सच्चिदानन्दमद्वयम् ॥ ८०॥

तेजोबिन्दु ३।२६
ऋतं सत्यं परं ब्रह्म सर्वसंसारभेषजम् ॥ ८१॥

जाबालदर्शन ९।१
ब्रह्म चिद्ब्रह्म भुवनं ब्रह्म भूतपरम्परा ॥ ८२॥

अन्नपूर्णा ५।२०
ब्रह्माहं ब्रह्मचिच्छत्रुर्ब्रह्म चिन्मित्रबान्धवाः ॥ ८३॥

अन्नपूर्णा ५।२०
ब्रह्मरूपतया ब्रह्म केवलं प्रतिभासते ॥ ८४॥

आत्म १
जगद्रूपतयाप्येतद्ब्रह्मैव प्रतिभासते ॥ ८५॥

आत्म २
विद्याविद्यादिभेदेन भावाभावादिभेदतः ॥ ८६॥

आत्म २
गुरुशिष्यादिभेदेन ब्रह्मैव प्रतिभासते ॥ ८७॥

आत्म ३

इदं ब्रह्म परं ब्रह्म सत्यं ब्रह्म प्रभुर्हि सः ॥ ८८॥

तेजोबिन्दु ६।३५

कालो ब्रह्म कला ब्रह्म सुखं ब्रह्म स्वयंप्रभम् ॥ ८९॥

तेजोबिन्दु ६।३५

एकं ब्रह्म द्वयं ब्रह्म मोहो ब्रह्म शमादिकम् ॥ ९०॥

तेजोबिन्दु ६।३६

दोषो ब्रह्म गुणो ब्रह्म दमः शान्तं विभुः प्रभुः ॥ ९१॥

तेजोबिन्दु ६।३६

लोको ब्रह्म गुरुर्ब्रह्म शिष्यो ब्रह्म सदाशिवः ॥ ९२॥

तेजोबिन्दु ६।३७

पूर्वं ब्रह्म परं ब्रह्म शुद्धं ब्रह्म शुभाशुभम् ॥ ९३॥

तेजोबिन्दु ६।३७

जीव एव सदा ब्रह्म स्वयं ब्रह्म सनातनम् ॥ ९४॥

तेजोबिन्दु ६।३८

इति सार्धान्तिकब्रह्मस्वरूपवाक्यानि चतुर्नवतिः ॥ ९४॥

सप्तदशं प्रकरणं समाप्तम् ।

१८ अथ सार्धान्तिकावशिष्टवाक्यानि । (३६)

सर्वविशेषं नेतिनेतीति विहाय यदवशिष्यते तदद्वयं ब्रह्म ॥ १॥

अद्वयतारक ३

जीवभावजगद्भावबाधे प्रत्यगभिन्नं ब्रह्मैवावशिष्यते ॥ २॥

पैङ्गल २

पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ॥ ३॥

शान्ति पाठ

पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ ४॥

शान्ति पाठ

कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ॥ ५॥

त्रिपाद्विभूतिमहानारायण ४

कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते ॥ ६॥

शुकरहस्य ३।१२

ततः स्तिमितगम्भीरं न तेजो न तमस्ततम् ॥ ७॥

योगकुण्डली ३।२४

अनाख्यमनभिव्यक्तं सत्किञ्चिदवशिष्यते ॥ ८॥

महा २।६५

सङ्कल्पमनसी भिन्ने न कदाचन केनचित् ॥ ९॥

महा ४।५३

सङ्कल्पजाते गलिते स्वरूपमवशिष्यते ॥ १०॥

महा ४।५३

महाप्रलयसम्पत्तौ ह्यसत्तां समुपागते ॥ ११॥

महा ४।५५

अशेषदृश्ये सर्गादौ शान्तमेवावशिष्यते ॥ १२॥

महा ४।५५

खेदोल्लासविलासेषु स्वात्मकर्तृतयानया ॥ १३॥

महा ६।३

स्वसङ्कल्पे क्षयं याते समतैवावशिष्यते ॥ १४॥

महा ६।३

समता सर्वभावेषु यासौ सत्यपरा स्थितिः ॥ १५॥

महा ६।४

परमामृतनाम्नी सा समतैवावशिष्यते ॥ १६॥

महा ४।१६

कालत्रयमुपेक्षित्वा हीनायाश्चैत्यबन्धनैः ॥ १७॥

सन्न्यास २।२७

चितश्चैत्यनुपेक्षित्र्याः समतैवावशिष्यते ॥ १८॥

सन्न्यास २।२७

सा हि वाचामगम्यत्वादसत्तामिव शाश्वतीम् ॥ १९॥

सन्न्यास २।२८

नैरात्म्यसिद्धान्तदशामुपयातेऽवशिष्यते ॥ २०॥

सन्न्यास २।२८

यावद्यावन्मुनिश्रेष्ठ स्वयं सन्त्यज्यतेऽखिलम् ॥ २१॥

अन्नपूर्णा १।४४

तावत्तावत्परालोकः परमात्मैव शिष्यते ॥ २२॥

अन्नपूर्णा १।४४

अभ्यासेन परिस्पन्दे प्राणानां क्षयमागते ॥ २३॥

अन्नपूर्णा २।३२

मनः प्रशममायाति निर्वाणमवशिष्यते ॥ २४॥

अन्नपूर्णा २।३२

ज्ञेयवस्तुपरित्यागे विलयं याति मानसम् ॥ २५॥

शाण्डिल्य १।५।२३

मानसे विलयं याते कैवल्यमवशिष्यते ॥ २६॥

शाण्डिल्य १।५।२३

यतो वाचो निवर्तन्ते विकल्पकलनान्विताः ॥ २७॥

अन्नपूर्णा २।३३

विकल्पसङ्क्षयाज्जन्तोः पदं तदवशिष्यते ॥ २८॥

अन्नपूर्णा २।३३

चिद्व्योमेव किलास्तीह परापरविवर्जितम् ॥ २९॥

अन्नपूर्णा ५।३६

सर्वत्रासम्भवच्चैत्यं यत्कल्पान्तेऽवशिष्यते ॥ ३०॥

अन्नपूर्णा ५।३६

पञ्चरूपपरित्यागादर्थरूपप्रहाणतः ॥ ३१॥

बह्वृचा

अधिष्ठानं परं तत्त्वमेकं सच्छिष्यते महत् ॥ ३२॥

बह्वृचा

सर्ववेदान्तसिद्धान्तसारं वच्मि यथार्थतः ॥ ३३॥

कठरुद्र ४२

स्वयं मृत्वा स्वयं भूत्वा स्वयमेवावशिष्यते ॥ ३४॥

कठरुद्र ४२

अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् ॥ ३५॥

योगकुण्डली ३।३५

अनाद्यनन्तं महतः परं ध्रुवं तदेव शिष्यत्यमलं निरामयम् ॥ ३६॥

कठ १।३।१५

इति सार्धान्तिकावशिष्टवाक्यानि षट्त्रिंशत् ॥३६॥

अष्टादशं प्रकरणं समाप्तम् ।

१९ अथ सार्धान्तिकफलवाक्यानि । (४०)

स यो ह वै तत्परमं ॥ १॥

रुद्रहृदय ५२

ब्रह्म वेद ब्रह्मैव भवति ॥ २॥

मुण्डक ३।२।९

ब्रह्मविदाप्नोति परम् ॥ ३॥

तैत्तिरीय २।१।१

ब्रह्मसंस्थोऽमृतत्वमेति ॥ ४॥

छान्दोग्य २।२३।१

तरति शोकमात्मवित् ॥ ५॥

छान्दोग्य ७।१।३

य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति ॥ ६॥

बृहदारण्यक १।४।१०

स एष विसुकृतो विदुष्कृतो ब्रह्मविद्विद्वान्ब्रह्मैवाभिप्रैति ॥ ७॥

कौषीतकीब्राह्मण १।४

तद्ब्रह्मैवाहमस्मीति ब्रह्म प्रणवमनुस्मरन् भ्रमरकीटन्यायेन
शरीरत्रयमुत्सृज्य सन्न्यासेनैव देहत्यागं करोति स कृतकृत्यो भवति ॥ ८॥

नारदपरिव्राजक ३।८६

तमेव ज्ञात्वा विद्वान् मृत्युमुखात् प्रमुच्यते ॥ ९॥

नारदपरिव्राजक ९।१

तदेवं विद्वांस इहैवामृता भवन्ति ॥ १०॥

शाट्यायनी १८

अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥ ११॥

कठ १।३।१५

यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ॥ १२॥

कठ २।३।८

यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ॥ १३॥

मुण्डक ३।३।१

तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥ १४॥

मुण्डक ३।१।३

एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य ॥ १५॥

मुण्डक २।१।१०
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ॥ १६॥

योगशिखा ५।४५
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ १७॥

योगशिखा ५।४५
यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय ॥ १८॥

मुण्डक ३।२।८
तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥ १९॥

मुण्डक ३।२।८
ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये ॥ २०॥

कैवल्य १।९
तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म सम्पद्यते ध्रुवम् ॥ २१॥

अमृतबिन्दु ८
यत्र यत्र स्थितो ज्ञानी परमाक्षरवित्सदा ॥ २२॥

ब्रह्मविद्या ४९
परब्रह्मणि लीयते न तस्योत्क्रान्तिरिष्यते ॥ २३॥

योगतत्त्व १०८
यद्यत्स्वाभिमतं वस्तु तत्त्यजन्मोक्षमश्नुते ॥ २४॥

महा ४।८८
असङ्कल्पनशस्त्रेण छिन्नं चित्तमिदं यदा ॥ २५॥

महा ४।९१
सर्वं सर्वगतं शान्तं ब्रह्म सम्पद्यते तदा ॥ २६॥

महा ४।९१
प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ॥ २७॥

नारदपरिव्राजक ३।५१
विसृज्य ध्यानयोगेन ब्रह्माप्येति सनातनम् ॥ २८॥

नारदपरिव्राजक ३।५१
घटाकाशमिवात्मानं विलयं वेत्ति तत्त्वतः ॥ २९॥

पैङ्गल ४।१४
स गच्छति निरालम्बं ज्ञानालोकं सनातनम् ॥ ३०॥

पैङ्गल ४।१४
तृणाग्रेष्वम्बरे भानौ नरनागामरेषु च ॥ ३१॥

अन्नपूर्णा ५।९४
यत्तिष्ठति तदेवाहमिति मत्वा न शोचति ॥ ३२॥

अन्नपूर्णा ५।९४
सर्वसाक्षिणमात्मानं वर्णाश्रमविवर्जितम् ॥ ३३॥

वराह २।१३
ब्रह्मरूपतया पश्यन्ब्रह्मैव भवति स्वयम् ॥ ३४॥

वराह २।१३
तद्ब्रह्मानन्दमद्वन्द्वं निर्गुणं सत्यचिद्घनम् ॥ ३५॥

वराह २।२०
विदित्वा स्वात्मनो रूपं न बिभेति कुतश्चन ॥ ३६॥

महा ४।७०
वासनां सम्परित्यज्य मयि चिन्मात्रविग्रहे ॥ ३७॥

मुक्तिका २।१८
यस्तिष्ठति गतस्नेहः सोऽहं सच्चित्सुखात्मकः ॥ ३८॥

मुक्तिका २।१८
दर्शनादर्शने हित्वा स्वयं केवलरूपतः ॥ ३९॥

मुक्तिका २।६४
य आस्ते कपिशार्दूल ब्रह्म न ब्रह्मवित्स्वयम् ॥ ४०॥

मुक्तिका २।६४

इति सार्धान्तिकफलवाक्यानि चत्वारिंशत् ॥४०॥

एकोनविंशं प्रकरणं समाप्तम् ।

२० अथ सार्धान्तिकविदेहमुक्तिवाक्यानि ॥ (७७)

विमुक्तश्च विमुच्यते ॥ १॥

कठ २।२।१

गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ॥ २॥

मुण्डक ३।२।९

अथाकामयमानो योऽकामो निष्काम आत्मकाम आप्तकामो न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्मैव सन्ब्रह्माप्येति ॥ ३॥

बृहदारण्यक ४।४।६

तद्यथाऽहि निर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेतेऽथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव ॥ ४॥

बृहदारण्यक ४।४।७

अशरीरो निरिन्द्रियोऽप्राणोऽतमाः सच्चिदानन्दमात्रः स स्वराट् भवति ॥ ५॥

नृसिंहतापिनी २।७।१

पृथिव्यप्सु प्रलीयत आपो ज्योतिषि लीयन्ते ज्योतिर्वायौ विलीयते वायुराकाश आकाशमिन्द्रियेष्विन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ विलीयन्ते भूतादिर्महति विलीयते महानव्यक्ते विलीयते व्यक्तमक्षरे विलीयतेऽक्षरं तमसि विलीयते तमः परे देव एकीभवति परस्तान्न सन्नासन्न सदसत् ॥ ६॥

सुबाल २

ब्रह्माण्डं तद्गतलोकान्कार्यरूपांश्च कारणत्वं प्रापयित्वा ततः सूक्ष्माङ्गं कर्मेन्द्रियाणि प्राणाश्च ज्ञानेन्द्रियाण्यन्तःकरणचतुष्टयं चैकीकृत्य सर्वाणि भौतिकानि कारणे भूतपञ्चके संयोज्य भूमिं जले जलं वह्नौ वह्निं वायौ वायुमाकाशे चाकाशमहङ्कारे चाहङ्कारं महति महदव्यक्ते अव्यक्तं पुरुषे क्रमेण विलीयते विराट् हिरण्यगर्भेश्वरा उपाधिविलयात्परमात्मनि लीयन्ते ॥ ७॥

पैङ्गल ३

प्रारब्धक्षयवशाद्देहत्रयभङ्गं
प्राप्योपाधिनिर्मुक्तघटाकाशवत्परिपूर्णता विदेहमुक्तिः ॥ ८॥

मुक्तिका १।२।६

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ॥ ९॥

शाट्यायनी २५

अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ १०॥

शाट्यायनी २५

वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद्यतयः शुद्धसत्त्वाः ॥ ११॥

मुण्डक ३।२।६

ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे ॥ १२॥

कैवल्य १।४

तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः ॥ १३॥

श्वेताश्वतर १।१०

जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते ॥ १४॥

पैङ्गल ३।३

विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव ॥ १५॥

महा २।६३

ततस्तु सम्बभूवासौ यद्गिरामप्यगोचरम् ॥ १६॥

अन्नपूर्णा ३।१९

यच्छून्यवादिनां शून्यं ब्रह्म ब्रह्मविदां च यत् ॥ १७॥

अन्नपूर्णा ३।१९

विज्ञानमात्रं विज्ञानविदां यदमलात्मकम् ॥ १८॥

अन्नपूर्णा ३।२०

पुरुषः साङ्ख्यसृष्टीनामीश्वरो योगवादिनाम् ॥ १९॥

अन्नपूर्णा ३।२०
शिवः शैवागमस्थानां कालः कालैकवादिनाम् ॥ २०॥

अन्नपूर्णा ३।२१
यत्सर्वशास्त्रसिद्धान्तं यत्सर्वहृदयानुगम् ॥ २१॥

अन्नपूर्णा ३।२१
यत्सर्वं सर्वगं वस्तु यत्तत्त्वं तदसौ स्थितः ॥ २२॥

अन्नपूर्णा ३।२२
यदनुक्तमनिष्पन्दं दीपकं तेजसामपि ॥ २३॥

अन्नपूर्णा ३।२२
स्वानुभूत्यैकमानं च यत्तत्त्वं तदसौ स्थितः ॥ २४॥

अन्नपूर्णा ३।२३
यदेकं चाप्यनेकं च साञ्जनं च निरञ्जनम् ॥ २५॥

अन्नपूर्णा ३।२३
यत्सर्वं चाप्यसर्वं च यत्तत्त्वं तदसौ स्थितः ॥ २६॥

अन्नपूर्णा ३।२३
निरानन्दोऽपि सानन्दः सच्चासच्च बभूव सः ॥ २७॥

अन्नपूर्णा ३।१८
न चेतनो न च जडो न चैवासन्न सन्मयः ॥ २८॥

अन्नपूर्णा २।२०
अजममरमनाद्यमाद्यमेकं पदममलं सकलं च निष्कलं च ॥ २९॥

अन्नपूर्णा ३।२४
स्थित इति स तदा नभःस्वरूपादपि विमलास्थितिरीश्वरक्षणेन ॥ ३०॥

अन्नपूर्णा ३।२४
व्यपगतकलनाकलङ्कशुद्धः स्वयममलात्मनि पावने पदेऽसौ ॥ ३१॥

महा २।७७
सलिलकण इवाम्बुधौ महात्मा विगलितवासनमेकतां जगाम ॥ ३२॥

महा २।७७
संशान्तदुःखमजडात्मकमेकसुप्त-
मानन्दमन्थरमपेतरजस्तमो यत् ॥ ३३॥

अन्नपूर्णा ४।२४
आकाशकोशतनवोऽतनवो महान्त-
स्मिन्पदे गलितचित्तलवा भवन्ति ॥ ३४॥

अन्नपूर्णा ४।२४
विदेहमुक्त एवासौ विद्यते निष्कलात्मकः ॥ ३५॥

अन्नपूर्णा ४।१९
समग्राग्र्यगुणाधारमपि सत्त्वं प्रलीयते ॥ ३६॥

अन्नपूर्णा ४।१९
विदेहमुक्तौ विमले पदे परमपावने ॥ ३७॥

अन्नपूर्णा ४।२०
विदेहमुक्तिविषये तस्मिन् सत्त्वक्षयात्मके ॥ ३८॥

अन्नपूर्णा ४।२०
चित्तनाशे विरूपाख्ये न किञ्चिदिह विद्यते ॥ ३९॥

अन्नपूर्णा ४।२१
न गुणा नागुणास्तत्र न श्रीर्नाश्रीर्न चैकता ॥ ४०॥

अन्नपूर्णा ४।२१
जीवन्नेव सदा मुक्तः कृतार्थो ब्रह्मवित्तमः ॥ ४१॥

आत्म २०
उपाधिनाशाद्ब्रह्मैव सन्ब्रह्माप्येति निर्द्वयम् ॥ ४२॥

आत्म २०
शास्त्रेण न स्यात्परमार्थदृष्टिः कार्यक्षमं नश्यति चापरोक्षात् ॥ ४३॥

वराह २।६९
प्रारब्धनाशात्प्रतिभासनाश एवं विधा नश्यति चात्ममाया ॥ ४४॥

वराह २।६९
अहिनिर्ल्वयनी सर्पनिर्वोको जीववर्जितः ॥ ४५॥

वराह २।६७
वल्मीके पतितस्तिष्ठेत्तं सर्पो नाभिमन्यते ॥ ४६॥

वराह २।६७
एवं स्थूलं च सूक्ष्मं च शरीरं नाभिमन्यते ॥ ४७॥

वराह २।६८
प्रत्यग्ज्ञानशिखिध्वस्ते मिथ्याज्ञाने सहेतुके ॥ ४८॥

वराह २।६८
नेति नेतीति रूपत्वादशरीरो भवत्ययम् ॥ ४९॥

वराह २।६८
विश्वश्च तैजसश्चैव प्राज्ञश्चेति च ते त्रयः ॥ ५०॥

योगकुण्डली ३।२१
विराड्ढिरण्यगर्भश्च ईश्वरश्चेति च ते त्रयः ॥ ५१॥

योगकुण्डली ३।२२
ब्रह्माण्डं चैव पिण्डाण्डं लोका भूरादयः क्रमात् ॥ ५२॥

योगकुण्डली ३।२२
स्वस्वोपाधिलयादेव लीयन्ते प्रत्यगात्मनि ॥ ५३॥

योगकुण्डली ३।२३
तूष्णीमेव स्थितस्तूष्णीं तूष्णीं सत्यं न किञ्चन ॥ ५४॥

तेजोबिन्दु ४।४०
कालभेदं वस्तुभेदं देशभेदं स्वभेदकम् ॥ ५५॥

तेजोबिन्दु ४।४१
किञ्चिद्भेदं न तस्यास्ति किञ्चिद्वापि न विद्यते ॥ ५६॥

तेजोबिन्दु ४।४२

जीवेश्वरेति वा क्वेति वेदशास्त्राणि क्वाहं त्विति ॥ ५७॥

तेजोबिन्दु ४।४६

इदं चैतन्यमेवेति अहं चैतन्यमित्यपि ॥ ५८॥

तेजोबिन्दु ४।४६

इति निश्चयशून्यो यो वैदेही मुक्त एव सः ॥ ५९॥

तेजोबिन्दु ४।४७

ब्रह्मभूतः प्रशान्तात्मा ब्रह्मानन्दमयः सुखी ॥ ६०॥

तेजोबिन्दु ४।३३

स्वच्छरूपो महामौनी वैदेही मुक्त एव सः ॥ ६१॥

तेजोबिन्दु ४।३३

ब्रह्मैवाहं चिदेवाहमेवं वापि न चिन्त्यते ॥ ६२॥

तेजोबिन्दु ४।३६

चिन्मात्रेणैव यस्तिष्ठेद्वैदेही मुक्त एव सः ॥ ६३॥

तेजोबिन्दु ४।३७

चैतन्यमात्रसंसिद्धः स्वात्मारामः सुखासनः ॥ ६४॥

तेजोबिन्दु ४।४७

तुर्यतुर्यः परानन्दो वैदेहीमुक्त एव सः ॥ ६५॥

तेजोबिन्दु ४।४८

यस्य प्रपञ्चभानं न ब्रह्माकारमपीह न ॥ ६६॥

तेजोबिन्दु ४।५१

अतीतातीतभावो यो वैदेही मुक्त एव सः ॥ ६७॥

तेजोबिन्दु ४।५३

चित्तवृत्तेरतीतो यश्चित्तवृत्त्यवभासकः ॥ ६८॥

तेजोबिन्दु ४।५३

सर्ववृत्तिविहीनात्मा वैदेही मुक्त एव सः ॥ ६९॥

तेजोबिन्दु ४।५४
सर्वत्रैवाहमात्मास्मि परमात्मा परात्मकः ॥ ७०॥

तेजोबिन्दु ४।६२
नित्यानन्दस्वरूपात्मा वैदेहीमुक्त एव सः ॥ ७१॥

तेजोबिन्दु ४।६२
जीवात्मा परमात्मेति चिन्तासर्वस्ववर्जितः ॥ ७२॥

तेजोबिन्दु ४।६५
सर्वसङ्कल्पहीनात्मा वैदेही मुक्त एव सः ॥ ७३॥

तेजोबिन्दु ४।६८
आत्मज्ञेयादिहीनात्मा यत्किञ्चिदिदमात्मकः ॥ ७४॥

तेजोबिन्दु ४।७९
भावाभावविहीनात्मा वैदेही मुक्त एव सः ॥ ७५॥

तेजोबिन्दु ४।७९
ॐकारवाच्यहीनात्मा सर्ववाच्यविवर्जितः ॥ ७६॥

तेजोबिन्दु ४।७८
अवस्थात्रयहीनात्मा अक्षात्मा चिदात्मकः॥ ७७॥

तेजोबिन्दु ४।७८
इत्येवं सार्धान्तिकविद्यादिविदेहकैवल्यन्तमहा-
वाक्यान्यष्टोत्तरसहस्रम् ॥ १००८॥

विंशं प्रकरणं समाप्तम् ।
इति श्रीमत्परमहंसपरिव्राजकाचार्य-
श्रीवासुदेवेन्द्रसरस्वतीचरणकमलमकरन्द-
तृप्तस्वान्तरामचन्द्रेन्द्रग्रथितेशावास्या-
द्यष्टोत्तरशतोपनिषत्सारसङ्ग्रह-
भूताष्टोत्तरसहस्रमहावाक्यरत्नावलिः संपूर्णा ॥